एवं सुनियताहारा सम्यग्व्रतपरायणा ।
भर्त्रा सह समाप्नोति वैकुण्ठपदमव्ययम् ॥
दग्धव्या साग्निहोत्रेण भर्त्तुः पूर्वं मृता तु या ।
स्वांशमग्निं समादाय भर्त्ता पूर्ववदाचरेत् ॥
कृत्वा कुशमयीं पत्नीं यावज्जीवमतन्द्रितः ।
जुहुयादग्निहोत्रं तु पञ्चयज्ञादिकं तथा ॥
अथ च प्रव्रजेद्विद्वान् कन्यां वापि समुद्वहेत् ।
प्रव्रज्यामपि कुर्व्वीत कर्म्म वेदोदितं महत् ॥
आत्मन्यग्निं समारोप्य जुहुयादात्मवान् सदा ।
मनसा वा प्रकुर्व्वीत नित्यनैमित्तिकक्रियाः ॥
गृहस्थो वा वनस्थो वा यतिर्वापि भवेद्द्विजः ।
अनाश्रमी न तिष्ठेत यावज्जीवं द्विजोत्तमः ॥
वर्णाश्रमेषु सर्व्वेषां पूजनीयो जनार्दनः ।
तं व्यापकेन मन्त्रेण सदैव च महोमते ॥
व्यापकानां च सर्व्वेषां ज्यायानष्टाक्षरो मनुः ।
अष्टाक्षरस्य जप्ता तु साक्षान्नारायणः स्वयम् ॥
न्यासं च समुद्रञ्च सर्पिश्छन्दोऽधि दैवतम् ।
न दीक्षा विधि न ध्यानं सार्थं मन्त्रमुदाहृतम् ॥
स्नात्वा शुद्धः प्रसन्नात्मा कृतकृत्यो जनार्दनम् ।
मनसाप्यर्चयित्वा वा जपेन्मन्त्रं सदा बुधः ॥
दानप्रतिग्रहौ यागं स्वाध्यायं पितृतर्पणम् ।
पितृक्रियाष्टाक्षरस्य जप्ता कुर्यादतन्द्रितः ॥
धृतोर्ध्व पुण्ड्रदेहश्च चक्राङ्कितभुजस्तथा ।
अष्टाक्षरं जपन्नित्यं पुनाति भुवनत्रयम् ॥

जपेद्वोगतया मन्त्रं सततं वैष्णवोत्तमः।
न साधनतया जप्यं कर्तव्यं विष्णुतत्परैः॥
अष्टोत्तरसहस्रं वा शतमष्टोत्तरन्तु वा।
त्रिसन्ध्यासु जपेन्मन्त्रं तदर्थं मनु चिन्तयन्॥
उपोष्य पूर्वदिवसे नद्यां स्नात्वा विधानतः।
आचार्यं संश्रयेत् पूर्वं महाभागवतं द्विजः॥
आचार्यो विष्णुमभ्यर्च्य पवित्रं चापि पूजयेत्।
पुरतो वासुदेवस्य इध्माधानान्तमाचरेत्॥
प्रजपेत् अस्य सूक्तेन पवित्रन्ते वतेत्यृचा।
पवमानस्य आद्येन ऋग्भिश्चतसृभिः क्रमात्॥
आज्यं हुत्वा ततश्चक्रं तदग्नौ प्रतपेद्गुरुः।
चरणं पवित्रमिति यजुषा तच्चक्रेणाङ्कयेद्भुजम्॥
वामां सम्प्रतपेत्यश्वत्थाच्च जन्येन देशिकः॥
अग्निर्मन्वेति यजुषा तद्धोमाग्नौ प्रतपयेत्॥
ततस्तु पार्थिवे ऋग्भिर्हुत्वा पुण्ड्राणि धारयेत्॥
अतो देवेति सूक्तेन विष्णोर्नुक्रमणेन च।
पूजयेद्द्वादशभिर्वै केशवादीननुक्रमात्॥
कुशग्रन्थिषु संपूज्य जुहुयात्ताभिरेव तु।
हुत्वाथ चरुणा सम्यक् मृदा शुभ्रेण देशिकः॥
ललाटादिषु चाङ्गेषु ऋग्भिस्ताभिः क्रमेण वै।
नामभिः केशवाद्यैश्च सच्छिद्राण्येव धारयेत्॥
श्रिये जात इति ऋचा कुङ्कुमङ्केषु धारयेत्।
परोमात्रेति सूक्तेन उपस्थाय जनार्दनम्॥
होमशेषं समापय्याथ मूर्त्युद्दापनमाचरेत्।

एवं पुण्ड्रक्रियां कृत्वा नाम दद्यात्ततः परम् ॥
प्रदः प्रानामितिसूक्तेन नाममूर्त्तिं समर्चयेत् ।
भवाज्यं प्रत्यृचं हुत्वा नाम दद्याच्च वैष्णवः ॥
अभिप्रियाणीति सूक्तेन उपस्थाय जनार्दनम् ।
प्रदक्षिण नमस्कारौ कृत्वा शेषं समाचरेत् ॥
मन्त्रदीक्षा विधानन्तु श्रौतं मुनिभिरीरितम् ।
नैवाङ्किता भवेद्दीक्षा न पृथक्त्वेन वक्ष्यते ॥
अदीक्षितो भवेद्यस्तु मन्त्रं वैष्णवमुत्तमम् ।
अर्चनं वापि कुरुते न संसिद्धिमवाप्नुयात् ॥
नादीक्षितः प्रकुर्व्वीत विष्णोराराधनक्रियाम् ।
श्रौतं वा यदि वा स्मार्त्तं दिव्यागममथापि वा ॥
तस्मादुक्तप्रकारेण दीक्षितो हरिमर्चयेत् ।
पूर्वक्तुपपोष्य गुरुणा नद्यां स्नात्वा कृतक्रियः ॥
आचार्यः पूजयेद्विष्णुं गन्धपुष्पाक्षतादिभिः ।
ईशान्यादि चतुर्दिक्षु संस्थाप्य कलशान् शुभान् ॥
तेषु रत्नानि निक्षिप्य चतुर्मूर्त्तीन् समर्चयेत् ।
वाराहं नारसिंहञ्च वामनं कृष्णमेव च ॥
तद्विष्णोरिति च द्वाभ्यां वाराहं पूजयेत्ततः ।
प्रतद्विष्णु इति ऋचा नारसिंहमनामयम् ॥
न ते विष्णो रित्यनेन वामनं पूजयेत्तथा ।
वषट्तेविष्णव इति कृष्णं संपूजयेत् द्विजः ॥
संपूज्यावरणं सर्वं गन्धपुष्पैर्विधानतः ।
प्रतिष्ठाप्य ततो वह्निमिध्माधानात्समाचरेत् ।
चतुर्भिर्वैष्णवैः सूक्तैः पायसं मधुमिश्रितम् ॥

हुत्वाज्यं जुहुयात्पश्चाच्छ्रीसूक्तेन समाहितः ।
अग्निमीड इत्यनुवाकेन सावित्र्या वैष्णवेन च ॥
सर्वैश्च वैष्णवैर्मन्त्रैः पृथगष्टोत्तरं शतम् ।
हुत्वा वेदसमाप्तिञ्च जुहुयाद्देशिकोत्तमः ॥
ततो भद्रासने शिष्यमुपविश्याभिषेचयेत् ।
चतुर्भिर्वैष्णवैर्मन्त्रैः सूक्तैः कलशोदकैः ॥
ऋत्विग्भिर्ब्राह्मणैः शिष्यमभिषिच्याथ देशिकः ।
कौपीनं कटिसूत्रञ्च तथा वस्त्रञ्च धारयेत् ॥
ऊर्ध्वपुण्ड्राणि पश्चाच्च तुलसीमालिकेऽपि च ।
कुशोत्तरे समासीनमाचान्तं विनयान्वितम् ॥
अध्यापयेद्वैष्णवानि सूक्तानि विमलानि च ।
व्यापकान् वैष्णवान् मन्त्रानन्यांश्चापि विधानतः ॥
तादर्थ्यन्यासमुद्रादि सर्पिश्छन्दोऽधिदैवतम् ।
तस्मिन्निवेश्य सद्वृत्तौ शासयेच्छासनाच्छ्रुतेः ॥
शासितो गुरुणा शिष्यः सद्वृत्तौ सत्पथे स्थितः ।
अर्चयेत्परमैकान्त्य सिद्धये हरिमव्ययम् ॥
आचार्यात्समनु प्राप्तं विग्रहं सुमनोहरम् ।
लब्ध्वाथ विधिना विष्णोः पूजयेत्तदनुज्ञया ॥
पूर्वेऽह्नि पूर्ववत्पूज्यः शीतनैवोपचारकैः ।
ताभिरेव च हुत्वाथ ऋग्भिराज्यं तथाक्रमात् ॥
शय्यासूक्तान्तमाज्येन हुत्वाग्निं वैष्णवोत्तमः ।
अध्यापयित्वा तान् मन्त्रान् वैदिकान् वैदिकोत्तमः ॥
पूजाविधानं त्रिविधं तस्मै होमान्तमादिशेत् ।
स्नान तर्पण होमार्चा जप्याद्या विविधाः क्रियाः ॥

वैशिष्टेण गुरोर्ज्ञात्वा भक्त्या सर्वं समाचरेत् ।
परमापद्गतो वापि न भुञ्जीत हरेर्दिने ॥
न तिर्यग्धारयेत्पुण्ड्रं नान्यं देवं प्रपूजयेत् ।
वैष्णवः पुरुषो यस्तु शिव ब्रह्मादिदैवतान् ॥
प्रणमेतार्चयेद्वापि विष्ठायां जायते क्रिमिः ।
रजस्तमोऽभिभूतानां देवतानां निरीक्षणात् ॥
पूजनाद्वन्दनाद्वापि वैष्णवो यात्यधोगतिम् ।
शुद्धसत्वमयो विष्णुः पूजनीयो जगत्पतिः ॥
अनर्चनीया रुद्राद्याः विष्णोरावरणं विना ।
यस्तु स्वात्मेश्वरं विष्णुमतीत्यान्यं यजेत हि ॥
स्वात्मेश्वराय हरये च्यवते नात्रसंशयः ।
यज्ञाध्ययनकाले तु नमस्यानि वषट्कृता ॥
तानि वै यज्ञयान्यत्र यज्ञो वै विष्णुरव्ययः ।
तस्यैवावरणं प्रोक्तं यज्ञाध्ययनकर्मसु ॥
स्तुवन्ति वेदास्तस्यात्र गुणरूपविभूतयः ।
तस्मादावरणं हित्वा ये यजन्ति परान् सुरान् ॥
ते यान्ति निरयं घोरं कल्पकोटिशतानि वै ।
रुद्रः काली गणेशश्च कूष्माण्डा भैरवादयः ॥
मद्यमांसाशिनश्चान्ये तामसाः परिकीर्त्तिताः ।
शुद्धानामपि देवानां या स्वतन्त्रार्चनक्रिया ॥
सा दुर्गतिं नयत्येव वैष्णवं वित्तकल्मषम् ।
अर्चयित्वा जगन्नाथं वैष्णवः पुरुषोत्तमम् ॥
तदावरणरूपेण यजेद्देवान् समन्ततः ।
अन्यथा नरकं याति यावदाभूतसंप्लवम् ॥

वासुदेवं जगन्नाथमर्चयित्वैव मानवः ।
प्राप्नोति महदैश्वर्यं ब्रह्मेन्द्रत्वादिकं क्षणात् ॥
मनसापि जलेनापि जगन्नाथं जनार्दनम् ।
सम्प्राप्नोत्यमलां सिद्धिं जगत्सर्वं समर्च्चितम् ॥
हृषीकेशं जगन्नाथं लक्ष्मीशं सर्वदं हरिम् ।
तं विना पुण्डरीकाक्षं कोऽर्चयेदितरान् सुरान् ॥
नारायणं परित्यज्य योऽन्यं देवमुपासते ।
स्वपतिं नृपतिं हित्वा यथा स्त्री पुरुषाधमम् ॥
विष्णोर्निवेदितं हव्यं देवेभ्यो जुहुयात् तथा ।
पितृभ्यश्चैव तद्दद्यात्सर्वमानन्त्यमश्नुते ॥
निर्माल्यमितरेषां तु यदन्नाद्यन्दिवौकसाम् ।
उपभुज्य नरो याति ब्रह्महत्यां न संशयः ॥
नैवेद्य भोजनं विष्णोः स्तत्पादाम्बु निषेवणम् ।
तुलसी खादनं नृणां पापिनामपिमुक्तिदम् ॥
एकादश्युपवासश्च शङ्खचक्रादिधारणम् ।
तुलस्या पूजनं विष्णोस्त्रितयं वैष्णवं स्मृतम् ॥
अवैष्णवः स्याद्यो विप्रो बहुशास्त्रश्रुतोऽपि वा ।
सजीवन्नेव चण्डालो मृतः श्वासोऽभिजायते ॥
क्रतुसाहस्रिणं वापि लोके विप्रमवैष्णवम् ।
चण्डालमिव नेक्षेत वर्जयेत्सर्वकर्म्मसु ॥
भगवद्भक्तिदीप्ताग्नि दग्धदुर्जातिकल्मषः ।
चण्डालोऽपि बुधैः श्लाघ्यो नतु पूज्यो ह्यवैष्णवः ॥
शङ्खचक्रोर्ध्वपुण्ड्रादिरहितं ब्राह्मणाधमम् ।
पूजयिष्यति यः श्राद्धे सर्वकर्मास्य निष्फलम् ॥

तिर्य्यक्पुण्ड्रधरं विप्रं यः श्राद्धे भोजयिष्यति ।
पितरस्तस्य यान्त्येव कालसूत्रं सुदारुणम् ॥
ऊर्ध्वपुण्ड्रधरं विप्रं चक्राङ्कितभुजं तथा ।
पूजयिष्यति यः श्राद्धे गयाश्राद्धायुतं लभेत् ॥
शङ्खचक्रोर्ध्वपुण्ड्राद्यैरन्वितं वैष्णवं द्विजम् ।
भक्त्या सम्पूजयेद्यस्तु दैवे पित्र्ये च कर्मणि ॥
कल्पकोटि सहस्राणि कल्पकोटिशतानि च ।
यास्यन्ति पितरस्तस्य विष्णुलोकं सुनिर्मलम् ॥
ऊर्ध्वपुण्ड्रधरं विप्रं तप्तचक्राङ्कितांसकम् ।
श्राद्धे सम्पूजयेद्यस्तु गयाश्राद्धायुतं लभेत् ॥
तप्तचक्रेण विधिना बाहुमूलेन लाञ्छितः ।
पुनाति सकलं लोकं नारायण इवापभित् ॥
अविद्यो वा सविद्यो वा शङ्खचक्रोर्ध्वपुण्ड्रधृत् ।
ब्राह्मणः सर्वलोकेषु पूज्यमानो हरिर्यथा ॥
दुराशी वा दुराचारी शङ्खचक्रोर्ध्वपुण्ड्रधृत् ।
नृणां हन्ति समस्ताघं तमः सूर्योदये यथा ॥
चक्राङ्कितस्य विप्रस्य पादप्रक्षालितं जलम् ।
पुनाति सकलं लोकं यथा त्रिपथगानदी ॥
तिस्रः कोट्यर्द्धकोटी च तीर्थानि भुवनत्रये ।
चक्राङ्कितस्य विप्रस्य पादे तिष्ठन्त्य संशयः ॥
चक्राङ्कितस्य विप्रस्य पादप्रक्षालितं जलम् ।
पीत्वा पातकसाहस्रैर्मुच्यते नात्र संशयः ॥
श्राद्धे दाने व्रते यज्ञे विवाहे चोपनायने ।
चक्राङ्कितं विप्रमेव पूजयेदितरांस्तु ॥

विष्णुचक्राङ्कितो विप्रो भुञ्जानोऽपि यतस्ततः।
न लिप्यते न पापेन तमसेव प्रभाकरः॥
चक्राङ्कित भुजो विप्रः पङ्क्ति मध्ये तु भुञ्जते।
पुनाति सकलां पङ्क्तिं गङ्गे वेतरगाहिनीम्॥
चक्राङ्कित भुजं विप्रं यो भूम्यामभिवादयेत्।
ललाटे पांशु संख्यानि विष्णुलोके महीयते॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा वैष्णवः पुमान्।
अर्चयित्वेतरान् देवान् निरयं यान्ध संशयम्॥
विष्णो रावरणं छित्वा पूजयित्वेतरान् सुरान्।
वैष्णवः पुरुषो याति कालसूत्रमधोमुखः॥
महापापी महापापैरन्वितो यदि वैष्णवः।
मन्वादि धर्म्मशास्त्रोक्तं प्रायश्चित्तं समाचरेत्॥
प्रायश्चित्त विशेषं तु पश्चात् कुर्व्वीत वैष्णवः।
वैयासिकीं वैष्णवीं च पवित्रीञ्च समाचरेत्॥
वैष्णवानान्तु विप्राणां पश्चात्पादजलं पिवेत्।
हन्तो न परिपूर्णोऽथ कर्म्मस्वधिकृतो भवेत्॥
मन्वरत्नार्थं विच्छान्तो नतेज्यो कर्म्मसंयुतः।
द्वादशी नियतो विप्रः स एव पुरुषोत्तमः॥
किमत्र बहुनोक्तेन सारं वक्ष्यामि ते नृप!।
एकादश्युपवासश्च शङ्खचक्रादिधारणम्॥
तदीयानां पूजनञ्च वैष्णवं त्रितयं स्मृतम्।
पुण्याहिणुदिनादन्यन्नोपोष्यं वैष्णवैः सदा॥
तथा भागवतादन्यो नार्चनीयो हि कुत्रचित्।
भगवन्तमनुद्दिश्य न दद्या न यजेत् क्वचित्॥

नावैष्णवान्नं भुञ्जीत दद्यान्ना वैष्णवाय च ।
नार्चयेदितरान् देवान्न तिर्यग्धारयेत्तथा ॥
एकादश्यान्न भुञ्जीत वसेन्ना वैष्णवैः सह ।
अष्टाक्षरस्य जप्तारं शङ्खचक्रधरं द्विजः ॥
अवमत्य विमूढात्मा सद्यश्चण्डालतां व्रजेत् ।
वैष्णवं ब्राह्मणं गाञ्च तुलसी द्वादशीं तथा ॥
अनर्चयित्वा मूढात्मा निरयं दुर्गतिं व्रजेत् ।
विष्णोः प्रधानतनवो विप्रा गावश्च वैष्णवाः ॥
भक्त्या संपूज्य तानेव याति विष्णोः परम्पदम् ।
एकादश्युपवासश्च द्वादश्यां विप्र पूजनम् ॥
नित्यमामलक स्नानं पापिनामपि मुक्तिदम् ।
पक्षे पक्षे हरि दिने चक्राङ्कित भुजे नृप ! ॥
संपूज्यमाने विप्रेन्द्रे हरिस्तेषां प्रसीदति ।
अभावे वैष्णवे विप्रे संप्राप्ते हरि वासरे ॥
तद्वत्सम्पूजयेद्‌ गावं तुलसीं वापि वैष्णवः ।
अग्निहोत्रन्तु जुहुयात्सायं प्रातर्द्विजोत्तमः ॥
पञ्चयज्ञांश्च कुर्व्वीत वैष्णवान् विष्णुमर्चयेत् ।
तदर्पितं वै भुञ्जीत पिवेत्तत्पादवारि वै ॥
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
पूजयेद्वैष्णवं विप्रं द्वादश्यामपि वैष्णवः ॥
विष्णोः प्रसाद तुलसीं तीर्थं वापि द्विजोत्तमः ।
उपवासदिने वापि प्राशयेदविचारयन् ॥
उपवासदिने यस्तु तीर्थं वा तुलसीदलम् ॥
न प्राशयेद्विमूढात्मा रौरवं नरकं व्रजेत् ।

हर्य्यर्पितन्तु यच्चान्नं तीर्थं वा पितृकर्म्मणि॥
दद्यात् पितॄणां यत्नेन गयाश्राद्धायुतं लभेत्।
हरेर्निवेदितं भक्त्या यो दद्याच्छ्राद्धकर्म्मणि॥
पितरस्तस्य यान्त्येव तद्विष्णोः परमं पदम्।
तीर्थं वा तुलसीपत्रं यो दद्यात्पितृदैवतम्॥
आकल्पकोटि पितरः परितृप्ता न संशयः।
यः श्राद्धकाले मूढात्मा पितॄणाञ्च दिवौकसाम्॥
न ददाति हरेर्भुक्तं तस्य वै नारकी गतिः।
हर्य्यर्पितन्तु यच्चान्नं यच्च पादोदकं हरेः॥
तुलसीं वा पितॄणाञ्च दत्त्वा श्राद्धायुतं लभेत्।
सर्व्वं यज्ञमयं विष्णुं मत्वा देवं जनार्दनम्।
आमन्त्र्य वैष्णवान् विप्रान् कुर्याच्छ्राद्धमतन्द्रितः॥
प्रत्यब्दं पार्व्वणश्राद्धं कुर्यात्पित्रोर्मृतेऽहनि।
अन्यथा वैष्णवो याति ब्रह्महत्यां न संशयः॥
अमायां कृष्णपक्षे च पित्र्ये वाभ्युदये तथा।
कुर्यात् श्राद्धं विधानेन विष्णोराज्ञा मनुस्मरन्॥
न कुर्यात् यो विधानेन पितृयज्ञं नराधमः॥
आज्ञातिक्रमणाद्विष्णोः पतत्येव न संशयः।
शङ्खचक्रोर्ध्वपुण्ड्रादिचिह्नैः प्रियतमैर्हरेः॥
अन्वितान् ब्राह्मणानेव पूजयेत्सर्व्वकर्म्मसु।
अश्राद्धिनोऽप्ययज्ञस्य कर्मत्यागिन एव च॥
वेदस्याप्यनधीतस्य संसर्गं दूरतस्त्यजेत्।
पित्रोः श्राद्धं प्रकुर्व्वीत नैकादश्यां द्विजोत्तमः॥
द्वादश्यान्तत्प्रकुर्व्वीत नोपवास दिने क्वचित्।

विष्णोर्जन्मदिने वापि गुरुणाञ्च मृतेऽहनि ॥
वैष्णवेष्टिं प्रकुर्व्वीत वैदिकं वैष्णवोत्तमः ।
अगम्यागमनं हिंसा मभक्ष्याणाञ्च भक्षणम् ॥
असत्य कथनं स्तेयं मनसापि विवर्जयेत् ।
तप्तचक्राङ्कनं विष्णोरेकादश्यामुपोषणम् ॥
धृतोर्ध्व पुण्ड्र देहत्वं तन्मन्त्राणां परिग्रहः ।
नित्यमामलकस्नानं देवतान्तरवर्जनम् ।
ध्यानं मन्त्रं जपो होमस्तुलस्याः पूजनं हरेः ॥
प्रसादस्तीर्थसेवा च तदीयानाञ्च पूजनम् ।
उपायान्तरसन्त्यागस्तथा मन्त्रार्थ चिन्तनम् ॥
श्रवणं कीर्त्तनं सेवा सत्कृत्यकरणं तथा ।
असत्कृत्य परित्यागो विषयान्तरवर्जनम् ॥
दानं दम स्तपः शौचं आर्जवं क्षान्तिरेव च ।
आनृशंस्यं सतां सङ्गः पारमैकान्त्यहेतवः ॥
वैष्णवः परमैकान्ती नेतरो वैष्णवः स्मृतः ।
नावैष्णवो व्रजेन्मुक्तिं बहुशास्त्र श्रुतोऽपि वा ॥
वैष्णवो वर्णबाह्योऽपि याति विष्णोः परं पदम् ।
एतत्ते कथितं राजन् ! पारमैकान्त्यसिद्धिदम् ॥
वेशिष्ठ्यं वैष्णवं धर्मशास्त्रं वेदोपबृंहितम् ।
विष्वक्सेनाय धात्रे च सम्प्रोक्तं परमात्मना ॥
विष्वक्सेनाय सम्प्रोक्तमेतद्विखनसे पुरा ।
भृगोः प्रोक्तं विखनसा भृगुणा च महर्षिणा ॥
भृगुणा च मनोः प्रोक्तं मनुना च समीरितम् ।
मनुस्तु धर्मशास्त्रन्तु सामान्येनोक्तवान् स्वयम् ॥

तदेव हि मया राजन्! वैशिष्ट्येण तवेरितम्।
विशिष्टं परमं धर्मशास्त्रं वैष्णवमुत्तमम्॥
य इदं शृणुयाद्भक्त्या कथयेद्वा समाहितः।
पारमैकान्त्य संसिद्धिं प्राप्नोत्येव न संशयः॥
सर्वपापविनिर्मुक्तो याति विष्णोः परं पदम्।
यस्त्विदं शृणुयाद्भक्त्या नित्यं विष्णोश्च सन्निधौ॥
अश्वमेधसहस्रस्य फलं प्राप्नोत्यसंशयः।
हारीतमेतच्छास्त्रन्तु परमां धर्मसंहिताम्॥
आलोक्य पूजयन् विष्णुं पारमैकान्त्यमश्नुते।
एतच्छ्रुत्वाम्बरीषस्तु हारीतोक्तिं नृपोत्तमः॥
ववन्दे परया भक्त्या तमृषिं वैष्णवोत्तमः।
त्वमेव परमोधर्मस्त्वमेव परमं तपः॥
त्वदङ्घ्रियुगलं प्राप्य सर्वसिद्धिमवाप्नुयाम्।
महामुनिमिति स्तुत्वा राजर्षिः स महातपाः॥
प्राप्तवान् परमैकान्त्यं तत्प्रसादात्सुसिद्धिदम्।
वैशिष्ट्यं पारमैकान्त्यं एतच्छास्त्रं समाश्रय॥
भारद्वाजादयः सर्वे नृपाश्च जनकादयः।
योगिनः सनकाद्याश्च नारदाद्याः सुरर्षयः॥
वसिष्ठाद्या वैष्णवाश्च विष्वक्सेनादयः सुराः।
एतच्छास्त्रानुसारेण पूजयामासुरच्युतम्॥
परमं वैदिकं शास्त्रमेतद्वैष्णवमुत्तमम्।
ज्ञात्वैव परमैकान्ती पूजयेद्विष्णुमीश्वरम्॥

इति हारीतस्मृतौ विशिष्टधर्मशास्त्रे हत्यधिको नाम
अष्टमोऽध्यायः॥

श्रीश्री गणेशाय नमः ॥

---

योगीश्वरं याज्ञवल्क्यं सम्पूज्य मुनयोऽब्रुवन् ।
वर्णाश्रमेतराणां नो ब्रूहि धर्म्मानशेषतः ॥ १ ॥
मिथिलास्थः स योगीन्द्रः क्षणं ध्यात्वाब्रवीन्मुनीन् ।
यस्मिन् देशे मृगः कृष्ण स्तस्मिन् धर्म्मान्निबोधत ॥ २॥
पुराणन्यायमीमांसा धर्म्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्द्दश ॥ ३ ॥
मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोङ्गिराः ।
यमापस्तम्बसम्वर्त्ताः कात्यायन बृहस्पती ॥ ४ ॥
पराशरव्यासशङ्खलिखिता दक्षगोतमौ ।
शातातपो वशिष्ठश्च धर्म्मशास्त्र प्रयोजकाः ॥ ५ ॥
देशकाल उपायेन द्रव्यं श्रद्धा समन्वितम् ।
पात्रे प्रदीयते यत्तत् सकलं धर्म्मलक्षणम ॥ ६ ॥
श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
सम्यक् सङ्कल्पजः कामो धर्म्ममूलमिदं स्मृतम ॥ ७ ॥
इज्याचारदमा हिंसादानं स्वाध्यायकर्म्म च ।
अयन्तु परमो धर्म्मोयद्योगेनात्मदर्शनम् ॥ ८ ॥
चत्वारो वेदधर्म्मज्ञाः पर्षत्त्रै विद्यमेव वा ।
सा ब्रूते यं स धर्म्मः स्यादेको वाध्यात्मवित्तमः ॥ ९ ॥
ब्रह्म क्षत्त्रियविट् शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः ।
निषेकादि श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः ॥१०॥

गर्भाधानमृतौ पुंसः सवनं स्पन्दनात् पुरा।
षष्ठेऽष्टमे वा सीमन्तः प्रसवे जातकर्म्म च ॥ ११ ॥
अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः।
षष्ठेऽन्नप्राशनं मासि चूड़ा कार्य्या यथाकुलम् ॥ १२॥
एवमेनः शमं याति वीजगर्भसमुद्भवम्।
तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः ॥१३॥
गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम्।
राज्ञामेकादशे सैके विशामेके यथाकुलम् ॥ १४ ॥
उपनीय गुरुः शिष्यं महाव्याहृतिपूर्व्वकम्।
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत् ॥ १५ ॥
दिवा सन्ध्यासु कर्णस्थ ब्रह्मसूत्र उदङ्मुखः।
कुर्य्यान्मूत्रपुरीषे तु रात्रौ चेद्दक्षिणामुखः ॥ १६ ॥
गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्ज्जलैः।
गन्धलेपक्षयकरं कुर्य्याच्छौचमतन्द्रितः ॥ १७ ॥
अन्तर्जानुः शुचौ देशे उपविष्ट उदङ्मुखः।
प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥१८॥
कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च।
प्रजापति पितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥ १९ ॥
त्रिःप्राश्यापो द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत्।
अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनवुद्वुदैः ॥ २० ॥
हृत्कण्ठतालुगाभिस्तु यथा संख्यं द्विजातयः।
शुध्येरन् स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः ॥ २१॥
स्नानमब्दैवतैर्मन्त्रैर्मार्ज्जनं प्राणसंयमः।
सूर्य्यस्य चाप्युपस्थानं गायत्र्याः प्रत्यहं जपः ॥ २२ ॥

गायत्रीं शिरसा सार्द्धं जपेद्व्याहृतिपूर्व्विकाम्।
प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसं यमः॥ २३॥
प्राणानायम्य सम्प्रोक्ष्य तृचेनाब्दैवतेन तु।
जपन्नासीत सावित्रीं प्रत्यगातारकोदयात्॥ २४॥
सन्ध्यां प्राक्प्रातरेवेह तिष्ठेदासूर्य्यदर्शनात्॥
अग्निकार्य्यं ततः कुर्य्यात् सन्ध्ययोरुभयोरपि॥ २५॥
ततोऽभिवादयेद्वृद्धानसावहमितिब्रुवन्।
गुरुञ्चैवाप्युपासीत स्वाध्यायार्थं समाहितः॥२६॥
आहूतश्चाप्यधीयीत लब्धं चास्मै निवेदयेत्।
हितं चास्याचरेन्नित्यं मनोवाक्कायकर्म्मभिः॥२७॥
कृतज्ञाद्रोहिमेधाविशुचिकल्याणसूचकाः।
अध्याप्या धर्म्मतः साधुशक्ताप्तज्ञानवित्तदाः॥२८॥
दण्डाजिनोपवीतानि मेखलाञ्चैव धारयेत्।
ब्राह्मणेषु चरेद्भैक्षमनिन्द्येष्वात्मवृत्तये॥ २९॥
आदिमध्यावसानेषु भवच्छब्दोपलक्षिता।
ब्राह्मणक्षत्रियविशां भैक्षचर्य्या यथाक्रमम्॥ ३०॥
कृताग्निकार्य्योभुञ्जीत वाग्यतोगुर्व्वनुज्ञया।
आपोशानक्रिया पूर्व्वं सत्कृत्यान्नमकुत्सयन्॥ ३१॥
ब्रह्मचर्य्ये स्थितोनैकमन्नमद्यादनापदि।
ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीड़यन्॥ ३२॥
मधुमांसाञ्जनोच्छिष्टशुक्तस्त्रीप्राणिहिंसनम्।
भास्करा लोकनाश्लीलपरिवादांश्च वर्जयेत्॥ ३३॥
स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति।
उपनीय ददद्वेदमाचार्य्यः स उदाहृतः॥ ३४॥

एकदेशमुपाध्यायऋत्विग्यज्ञकृदुच्यते।
एते मान्या यथापूर्व्वमेभ्योमाता गरीयसी॥ ३५॥
प्रतिवेदं ब्रह्मचर्य्यं द्वादशाब्दानि पञ्च वा।
ग्रहणान्तिकमित्येके केशान्तश्चैव षोड़शे॥ ३६॥
आ षोड़शाब्दाद्द्वाविंशाच्चतुर्विंशाच्च वत्सरात्।
ब्रह्मक्षत्रविशां कालऔपनायनिकः परः॥ ३७॥
अत ऊर्द्ध्वं पतन्त्येते सर्वधर्म्म वहिष्कृताः।
सावित्री पतिता व्रात्याव्रात्यस्तोमादृते क्रतोः॥ ३८॥
मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात्।
ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजाः स्मृताः॥ ३९॥
यज्ञानां तपसाञ्चैव शुभानां चैव कर्म्मणाम्।
वेदएव द्विजातीनां निःश्रेयसकरः परः॥ ४०॥
मधुना पयसा चैव स देवां स्तर्पयेद्द्विजः।
पितॄंश्च मधुसर्पिर्भ्यामृचोऽधीते तु योऽन्वहम्॥ ४१॥
यजूंषि शक्तितोऽधीते योऽन्वहं स घृतामृतैः।
प्रीणाति देवानाजेन मधुना च पितॄंस्तथा॥ ४२॥
स तु सोमघृतैर्द्देवां स्तर्पयेद्योऽन्वहं पठेत्।
सामानि तृप्तिं कुर्य्याच्च पितॄणां मधुसर्पिषा॥ ४३॥
मेदसा तर्पयेद्देवानथर्व्वाङ्गिरसः पठन्।
पितॄंश्च मधुसर्पिर्भ्यामन्वहं शक्तितोद्विजः॥ ४४॥
वाकोवाक्यं पुराणञ्च नाराशंसीश्च गाथिकाः।
इतिहासां स्तथा विद्यां योऽधीते शक्तितोऽन्वहम्॥४५॥
मांसक्षीरौदनमधुतर्पणं स दिवौकसाम्।
करोति तृप्तिञ्च तथा पितॄणां मधुसर्पिषा॥ ४६॥

ते तृप्तास्तर्पयन्त्येनं सर्वकाम फलैः शुभैः ।
यं यं क्रतुमधीयेत तस्य तस्याप्नुयात् फलम् ॥ ४७ ॥
त्रिर्वित्तपूर्णं पृथिवीदानस्य फलमश्नुते ।
तपसश्च परस्येह नित्यं स्वाध्यायवान् द्विजः ॥ ४८ ॥
नैष्ठिको ब्रह्मचारी तु वसेदाचार्य्यसन्निधौ ।
तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वा ॥ ४९ ॥
अनेन विधिना देहं साधयन् विजितेन्द्रियः ।
ब्रह्मलोकमवाप्नोति नचेह जायते पुनः ॥ ५० ॥
गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया ।
वेदं व्रतानि वापारं नीत्वाप्युभयमेव वा ॥ ५१ ॥
अविप्लुत ब्रह्मचर्य्यो लक्षण्यां स्त्रियमुद्वहेत् ।
अनन्यपूर्व्विकां कान्तामसपिण्डां यवीयसीम् ॥ ५२ ॥
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ।
पञ्चमात् सप्तमादूर्द्ध्वं मातृतः पितृतस्तथा ॥ ५३ ॥
दशपूरुषविख्याताच्छ्रोत्रियाणां महाकुलात् ।
स्फीतादपि न सञ्चारिरोगदोष समन्वितात् ॥ ५४ ॥
एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियोवरः ।
यत्नात् परीक्षितः पुंस्त्वे युवा धीमान् जनप्रियः ॥५५॥
यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः ।
न तन्मम मतं यस्मात्तत्रात्मा जायते स्वयम् ॥ ५६ ॥
तिस्रोवर्णानुपूर्व्वेण द्वे तथैका यथाक्रमम् ।
ब्राह्मण क्षत्रिय विशां भार्य्याः स्वा शूद्रजन्मनः ॥५७॥
ब्राह्मो विवाह आहूय दीयते शक्त्यलङ्कृता ।
तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ॥ ५८ ॥

यज्ञस्थायर्त्विजे दैवस्त्रादायार्षस्तु गोद्वयम् ।
चतुर्द्दश प्रथमजः पुनात्युत्तरजश्च षट् ॥ ५९ ॥
इत्युक्त्वा चरतां धर्मं सह या दीयतेऽर्थिने ।
स कायः पावयेत्तज्जः षट्षड्वंश्यान् सहात्मना ॥६०॥
आसुरो द्रविणादानाद्गान्धर्वः समयान्मिथः ।
राक्षसो युद्धहरणात् पैशाचः कन्यकाच्छलात् ॥६१ ॥
पाणिर्ग्राह्यः सवर्णासु गृह्णीयात् क्षत्रिया शरम् ।
वैश्या प्रतोदमादद्याद्वेदनेत्वग्रजन्मनः ॥ ६२ ॥
पिता पितामहो भ्राता सकुल्यो जननी तथा ।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥ ६३ ॥
अप्रयच्छन् समाप्नोति भ्रूणहत्या मृतावृतौ ।
गम्यन्त्वभावे दातॄणां कन्या कुर्य्यात् स्वयम्बरम् ॥ ६४॥
सकृत् प्रदीयते कन्या हरं स्तां चौरदण्डभाक् ।
दत्तामपि हरेत् पूर्व्वाच्छ्रेयांश्चेद्वर आव्रजेत् ॥ ६५ ॥
अनाख्याय ददद्दोषं दण्ड्य उत्तमसाहसम् ।
अदुष्टाञ्च त्यजन् कन्यां दूषयंश्च मृषाशतम् ॥ ६६ ॥
अक्षता वा क्षता चैव पुनर्भूः संस्कृता पुनः ।
स्वैरिणी या पतिं हित्वा सवर्णं कामतः श्रयेत् ॥६७॥
अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया ।
सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात् ॥६८॥
आगर्भं सम्भवाद्गच्छेत् पतितस्त्वन्यथा भवेत् ।
अनेन विधिना जातः क्षेत्रजः स भवेत् सुतः ॥ ६९ ॥
हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम् ।
परिभूतामधःशय्यां वासयेद्व्यभिचारिणीम् ॥ ७० ॥

सोमः शौचं ददौ तासां गन्धर्व्वाश्च शुभां गिरम् ।
पावकः सर्व्वमेध्यत्वं मेध्या वै योषितो ह्यतः ॥ ७१ ॥
व्यभिचाराद्दतौ शुद्धिर्गर्भे त्यागो विधीयते ।
गर्भभर्त्तृवधादौ च तथा महति पातके ॥ ७२ ॥
सुरापी व्याधिता धूर्त्ता वन्ध्यार्थघ्न्यप्रियम्वदा ।
स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा ॥ ७३ ॥
अधिविन्ना तु भर्त्तव्या महदेनोऽन्यथा भवेत् ।
यत्रानुकूल्यं दम्पत्योस्त्रिवर्गस्तत्र वर्द्धते ॥ ७४ ॥
मृते जीवति वा पत्यौ या नान्यमुपगच्छति ।
सेह कीर्त्तिमवाप्नोति मोदते चोमया सह ॥ ७५ ॥
आज्ञासम्पादिनीं दक्षां वीरसूं प्रियवादिनीम् ।
त्यजन् दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियाः ॥७६ ॥
स्त्रीभिर्भर्त्तृवचः कार्य्यमेष धर्म्मः परः स्त्रियाः ।
आशुद्धेः संप्रतीक्ष्यो हि महापातकदूषितः ॥ ७७ ॥
लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः ।
यस्मात्तस्मात् स्त्रियः सेव्या भर्त्तव्याश्च सुरक्षिताः ॥७८॥
षोड़शर्त्तुनिशाः स्त्रीणां तासु युग्मासु संविशेत् ।
ब्रह्मचार्य्येव पर्व्वाण्याद्याश्चतस्रस्तु वर्जयेत् ॥ ७९ ॥
एवं गच्छन् स्त्रियं क्षामां मघां मूलञ्च वर्जयेत् ।
सुस्थ इन्दौ सकृत् पुत्रं लक्षण्यं जनयेत् पुमान् ॥ ८० ॥
यथा कामी भवेद्वापि स्त्रीणां वरमनुस्मरन् ।
स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतः स्मृताः ॥ ८१ ॥
भर्त्तृभ्रातृपितृज्ञातिश्वश्रूश्वशुरदेवरैः ।
वन्धुभिश्च स्त्रियः पूज्याभूषणाच्छादनाशनैः ॥ ८२ ॥

संयतोपस्करा दक्षा हृष्टा व्ययपराङ्मुखी ।
कुर्य्याच्छ्वशुरयोः पादवन्दनं भर्त्तृतत्परा ॥ ८३ ॥
क्रीड़ां शरीरसंस्कारं समाजोत्सवदर्शनम् ।
हास्यं परगृहे यानं त्यजेत् प्रोषित भर्त्तृका ॥ ८४ ॥
रक्षेत् कन्यां पिता विन्नां पतिः पुत्रास्तु वार्द्धके ।
अभावे ज्ञातयस्तेषां स्वातन्त्र्यं न क्वचित् स्त्रियाः॥८५
पितृमातृसुतभ्रातृश्वश्रूश्वशुरमातुलैः ।
हीना न स्याद्विना भर्त्त्रा गर्हणीयान्यथा भवेत्॥८६॥
पतिप्रियहिते युक्ता स्वाचारा संजतेन्द्रिया ।
इह कीर्त्तिमवाप्नोति प्रेत्य चानुपमं सुखम् ॥ ८७॥
सत्यामन्यां सवर्णायां धर्म्मकार्य्यं न कारयेत् ।
सवर्णासु विधौ धर्म्म्ये ज्येष्ठया न विनेतराः ॥ ८८ ॥
दाहयित्वाग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः ।
आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन् ॥ ८९ ॥
सवर्णेभ्यः सवर्णासु जायन्ते वै सजातयः ।
अनिन्द्येषु विवाहेषु पुत्राः सन्तानवर्द्धनाः ॥ ९० ॥
विप्रान्मूर्द्धाभिषिक्तोहि क्षत्रियाणां विशः स्त्रियाम् ।
अम्बष्ठः शूद्रयां निषादोजातः पारशवोऽपिवा ॥ ९१ ॥
वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ ।
वैश्यात्तु करणः शूद्रयां विन्नास्वेषविधिः स्मृतः ॥९२॥
ब्राह्मण्यां क्षत्रियात् सूतोवैश्याद्वैदेहकस्तथा ।
शूद्राज्जातस्तु चाण्डालः सर्वधर्म्मबहिष्कृतः ॥ ९३ ॥
क्षत्रिया मागधं वैश्याच्छूद्रात् क्षत्तारमेव तु ।
शूद्रादायोगवं वैश्या जनयामास वै सुतम् ॥९४ ॥

माहिष्येण करण्यान्तु रथकारः प्रजायते।
असत्सन्तस्तु विज्ञेयाः प्रतिलोमानुलोमजाः॥ ९५॥
जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा।
व्यत्यये कर्म्मणां साम्यं पूर्ववच्चोत्तराधरम्॥ ९६॥
कर्म्म स्मार्त्तं विवाहाग्नौ कुर्व्वीत प्रत्यहं गृही।
दायकालाहृतेनापि श्रौतं वैतानिकाग्निषु॥ ९७॥
शरीरचिन्तां निर्वर्त्य कृतशौचविधिर्द्विजः।
प्रातःसन्ध्यामुपासीत दन्तधावनपूर्व्वकम्॥ ९८॥
हुत्वाग्नीन् सूर्य्यदैवत्यान् जपेन्मन्त्रान् समाहितः।
वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च॥ ९९॥
उपेयादीश्वरञ्चैव योगक्षेमार्थसिद्धये।
स्नात्वा देवान् पितृंश्चैव तर्पयेदर्च्चयेत्तथा॥ १००॥
वेदाथर्व्वपुराणानि सेतिहासानि शक्तितः।
जपयज्ञप्रसिद्ध्यर्थं विद्याञ्चाध्यात्मिकीं जपेत्॥ १०१॥
वलिकर्म्मस्वधाहोमस्वाध्यायातिथिसत्क्रिया।
भूतपितृमरब्रह्ममनुष्याणां महामखाः॥ १०२॥
देवेभ्यश्च हुतादन्नाच्छेषाद्भूत वलिं हरेत्।
अन्नं भूमौ श्वचाण्डालवायसेभ्यश्च निःक्षिपेत्॥१०३॥
अन्नं पितृमनुष्येभ्यो देयमप्यन्वहं जलम्।
स्वाध्यायमन्वहं कुर्य्यात् न पचेदन्नमात्मने॥ १०४॥
बालं सुवासिनी वृद्ध गर्भिण्या तुरकन्यकाः।
सम्भोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम्॥१०५॥
आपोशानेनो परिष्टादधस्तादश्नता तथा।
अनग्नममृतञ्चैव कार्य्यमन्नं द्विजन्मना॥ १०६॥

अतिथित्वेन वर्णेभ्यो देयं शक्त्यानुपूर्वशः ।
अप्रणोद्योऽतिथिः सायमपि वाग्भूतृणोदकैः ॥१०७॥
सत्कृत्य भिक्षवे भिक्षा दातव्या सव्रताय च ।
भोजयेच्चागतान् काले सखिसम्बन्धिबान्धवान् ॥१०८॥
महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत् ।
सत्क्रियान्वासनं स्वादु भोजनं सूनृतं वचः ॥ १०९॥
प्रतिसम्वत्सरं त्वर्घ्याः स्नातकाचार्य्यपार्थिवाः ।
प्रियो विवाह्यश्च तथा यज्ञं प्रत्यृत्विजः पुनः ॥ ११० ॥
अध्वनीनोऽतिथिर्ज्ञेयः श्रोत्रियो वेदपारगः ।
मान्यावेतौ गृहस्थस्य ब्रह्मलोकमभीप्सतः ॥ १११ ॥
परपाकरुचिर्न स्यादनिन्द्यामन्त्रणादृते ।
वाक्पाणिपादचापल्यं वर्जयेच्चातिभोजनम् ॥ ११२॥
अतिथिं श्रोत्रियं तृप्तमासीमान्त मनुव्रजेत् ।
अहःशेषं सहासीत शिष्टैरिष्टैश्च बन्धुभिः ॥ ११३ ॥
उपास्य पश्चिमां सन्ध्यां हुत्वाग्नीं स्तानुपास्य च ।
भृत्यैः परिवृतो भुक्त्वा नातितृप्तोऽथ संविशेत् ॥११४॥
ब्राह्मे मुहूर्त्ते उत्थाय चिन्तयेदात्मनो हितम् ।
धर्म्मार्थकामान् स्वे काले यथाशक्ति न हापयेत्॥ ११५॥
विद्याकर्म्मवयोबन्धुवित्तैर्मान्या यथाक्रमम् ।
एतैः प्रभूतैः शूद्रोऽपि वार्द्धके मानमर्हति ॥ ११६ ॥
वृद्धभारिनृपस्नातस्त्रीरोगिवरचक्रिणाम् ।
पन्था देयो नृपस्तेषां मान्यः स्नातस्तु भूपतेः ॥११७ ॥
इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य च ।
प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा ॥ ११८ ॥

प्रधानं क्षत्रिये कर्म्म प्रजानां परिपालनम् ।
कुसीदकृषिवाणिज्यं पाशुपाल्यं विशः स्मृतम् ॥११९॥
शूद्रस्य द्विजशुश्रूषा तयाऽजीवन् वणिग्भवेत् ।
शिल्पैर्व्वा विविधैर्जीवेद्द्विजातिहितमाचरन् ॥१२०॥
भार्य्यारतिः शुचिर्भृत्यभर्त्ता श्राद्धक्रियारतः ।
नमस्कारेण मन्त्रेण पञ्चयज्ञान् न हापयेत् ॥१२१॥
अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
दानं दया दमः क्षान्तिः सर्व्वेषां धर्म्मसाधनम् ॥११२॥
वयोबुद्ध्यर्थवाग्वेशश्रुताभिजनकर्म्मणाम् ।
आचरेत् सदृशीं वृत्तिमजिह्मामशठां्तथा ॥ ११३ ॥
त्रैवार्षिकाधिकान्नो यः स तु सोमं पिबेद्द्विजः ।
प्राक् सौमिकीः क्रियाः कुर्य्याद्यस्यान्नं वार्षिकं भवेत् ॥११४
प्रतिसम्वत्सरं सोमः पशुः प्रत्ययनन्तथा ।
कर्त्तव्याग्रयणेष्टिश्च चातुर्म्मास्यानि चैव हि ॥ १२५ ॥
एषामसम्भवे कुर्य्यादिष्टिं वैश्वानरीं द्विजः ।
हीनकल्पं न कुर्व्वीत सति द्रव्येऽफल प्रदम् ॥१२६॥
चाण्डालो जायते यज्ञकारणाच्छूद्रभिक्षितात् ॥
यज्ञार्थं लब्धमददद्भासः काकोऽपिवा भवेत् ॥१२७ ॥
कुशूल कुम्भीधान्यो वा त्र्यहिकोऽश्वस्तनोपि वा ।
जीवेद्वापि शिलोञ्छेन श्रेयानेषां परः परः ॥ १२८ ॥
न स्वाध्याय विरोध्यर्थमीहेत न यतस्ततः ।
न विरुद्ध प्रसङ्गेन सन्तोषी च सदा भवेत् ॥१२९॥
राजान्तेवासियाज्येभ्यः सीदन्निच्छेद्धनं क्षुधा ।
दम्भिहैतुक पाषण्डबकवृत्तींश्च वर्जयेत् ॥ १३० ॥

शुक्लाम्बरधरो नीचकेशश्मश्रुनखः शुचिः ।
न भार्यादर्शनेऽश्नीयान्नैकवासा न संस्थितः ॥ १३१ ॥
न संशयं प्रपद्येत नाकस्मादप्रियं वदेत् ।
नाहितं नानृतं चैव न स्तेनः स्यान्न वार्धुषिः ॥ १३२ ॥
दाक्षायणी ब्रह्मसूत्री वेणुमान् सकमण्डलुः ।
कुर्यात्प्रदक्षिणं देवमृद्गोविप्रवनस्पतीन् ॥ १३३ ॥
न तु मेहेन्नदीछायावर्त्मगोष्ठाम्बुभस्मसु ।
न प्रत्यर्काग्निगोसोमसन्ध्याम्बु स्त्री द्विजन्मनः ॥ १३४ ॥
नेक्षेतार्कं न नग्नां स्त्रीं न च संसृष्टमैथुनाम् ।
न च मूत्रपुरीषं वा नाशुची राहुतारकाः ॥ १३५ ॥
अयं मे वज्र इत्येवं सर्वं मन्त्रमुदीरयन् ।
वर्षत्यप्रावृतो गच्छेत् स्वप्यात् प्रत्यक्शिरा न च ॥ १३६ ॥
ष्ठीवनासृक्शकृन्मूत्ररेतांस्यप्सु न निःक्षिपेत् ।
पादौ प्रतापयेन्नाग्नौ न चैनमभिलङ्घयेत् ॥ १३७ ॥
जलं पिबेन्नाञ्जलिना शयानं न प्रबोधयेत् ।
नाक्षैः क्रीडेन्न धर्मघ्नैर्व्याधितैर्वा न संविशेत् ॥ १३८ ॥
विरुद्धं वर्जयेत् कर्म प्रेतधूमं नदीतरम् ।
केशभस्मतुषाङ्गारकपालेषु च संस्थितिम् ॥ १३९ ॥
नाचक्षीत धयन्तीं गां नाद्वारेण विशेत् क्वचित् ।
न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्तिनः ॥ १४० ॥
प्रतिग्रहे सूनिचक्रिध्वजिवेश्यानराधिपाः ।
दुष्टा दशगुणं पूर्वात् पूर्वादेते यथोत्तरम् ॥ १४१ ॥
अध्यायानामुपाकर्म श्रावण्यां श्रवणेन वा ।
हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य तु ॥ १४२ ॥

पौषमासस्य रोहिण्यामष्टकायामथापि वा ।
जलान्ते च्छन्दसां कुर्य्यादुत्सर्गं विधिवद्बहिः ॥१४३॥
त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु ।
उपाकर्म्मणि चोत्सर्गे स्वशाखाश्रोत्रिये मृते ॥ १४४ ॥
सन्ध्यागर्जितनिर्घातभूकम्पोल्कानिपातने ।
समाप्य वेदं द्युनिशमारण्यकमधीत्य च ॥ १४५ ॥
पञ्चदश्यां चतुर्द्दश्यामष्टम्यां राहुसूतके ।
ऋतुसन्धिषु भुक्त्वा वा श्राद्धिकं प्रतिगृह्य च ॥ १४६ ॥
पशुमण्डूकनकुलमार्जारश्वाहिमूषकैः ।
कृतेऽन्तरे त्वहोरात्रं शक्रपाते तथोच्छ्रये ॥ १४७ ॥
श्वक्रोष्टुगर्दभोलूकसामबाणार्त्तनिस्वने ।
अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके ॥ १४८ ॥
देशेऽशुचावात्मनि च विद्युत्स्तनितसंप्लवे ।
भुक्त्वार्द्रपाणिरम्भोऽन्तरर्द्धरात्रेऽतिमारुते ॥ १४९ ॥
पांशुवर्षे दिशां दाहे सन्ध्यानीहारभीतिषु ।
धावतः पूतिगन्धे च शिष्टे च गृहमागते ॥ १५० ॥
खरोष्ट्रयानहस्त्यश्वनौवृक्षेरिणरोहणे ।
सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान् विदुः ॥१५१॥
देवर्त्विक्स्नातकाचार्य्यराज्ञां छायां परस्त्रियाः ।
नाक्रामेद्रक्तविण्मूत्रष्ठीवनोद्वर्त्तनादि च ॥ १५२ ॥
विप्राहिक्षत्रियात्मानो नावज्ञेयाः कदाचन ।
आमृत्योः श्रियमाकाङ्क्षेन्न कञ्चिन्मर्म्मणि स्पृशेत् ॥१५३॥
दूरादुच्छिष्टविण्मूत्रपादाम्भांसि समुत्सृजेत् ।
श्रुतिस्मृत्युदितं सम्यक् नित्यमाचारमाचरेत् ॥१५४॥

गोब्राह्मणानलानानि नोच्छिष्टानि पदा स्पृशेत् ।
न निन्दा ताड़ने कुर्य्यात्सुतं शिष्यञ्च ताड़येत् ॥१५५॥
कर्म्मणा मनसा वाचा यत्नाद्धर्म्मं समाचरेत् ।
अस्वर्ग्यं लोकविद्विष्टं धर्म्ममप्याचरेन्नतु ॥ १५६ ॥
मातृ पित्रतिथि भ्रातृजामि सम्बन्धिमातुलैः ।
वृद्ध बालातुराचार्य्य वैद्यसंश्रितबान्धवैः ॥ १५७ ॥
ऋत्विक् पुरोहितापत्य भार्य्यादास सनाभिभिः ।
विवादं वर्जयित्वा तु सर्व्वाल्लोकान् जयेद्गृही ॥१५८॥
पञ्चपिण्डाननुद्धृत्य न स्नायात् परवारिषु ।
स्नायान्नदी देवखातगर्त्त प्रस्रवणेषु च ॥ १५९ ॥
परशय्या सनोद्यान गृहयानानि वर्जयेत् ।
अदत्तान्यग्निहीनस्य नान्नमद्यादनापदि ॥ १६० ॥
कदर्य्यबद्धचौराणां क्लीवरङ्गावतारिणाम् ।
वैणाभिशस्तवार्द्धुषिगणिकागणदीक्षिणाम् ॥ १६१ ॥
चिकित्सकातुरक्रुद्धपुंश्चलीमत्तविद्विषाम् ।
क्रूरोग्रपतितव्रात्यदाम्भिकोच्छिष्टभोजिनाम् ॥१६२॥
अवीरास्त्रीस्वर्णकारस्त्रीजितग्रामयाजिनाम् ।
शस्त्रविक्रयिकर्म्मारतन्तुवायश्वजीविनाम् ॥ १६३ ॥
नृशंसराजरजककृतघ्नवधजीविनाम् ।
चैलधावसुराजीविसहोपपतिवेश्मनाम् ॥ १६४ ॥
पिशुनानृतिनोश्चैव तथा चाक्रिकबन्दिनाम् ।
एषामन्नं न भोक्तव्यं सोमविक्रयिणस्तथा ॥ १६५ ॥
अनर्च्चितम् वृथामांसं केश कीटसमन्वितम् ।
शुक्तं पर्य्युसितोच्छिष्टं श्वस्पृष्टं पतितेक्षितम् ॥ १६६ ॥

उदक्यास्पृष्टसंघुष्टं पर्य्यायान्नञ्च वर्जयेत् ।
गोघ्रातं शकुनोच्छिष्टं पदा स्पृष्टञ्च कामतः ॥१६७॥
शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणः ।
भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत् ॥ १६८ ॥
अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम् ।
अस्नेहा अपि गोधूमयवगोरसविक्रियाः ॥ १६९ ॥
सन्धिन्यनिर्दशाऽवत्सगोः पयः परिवर्जयेत् ।
औष्ट्रमैकशफं स्त्रैणमारण्यकमथाविकम् ॥ १७० ॥
देवतार्थं हविः शिग्रुं लोहितान् व्रश्चनांस्तथा ।
अनुपाकृतमांसानि विड्जानि करकाणि च ॥ १७१ ॥
क्रव्याद पक्षिदात्यूह शुकप्रतुदटिट्टिभान् ।
सारसैकशफान् हंसान् सर्वांश्च ग्रामवासिनः ॥१७२ ॥
कोयष्टिप्लवचक्राह्वबलाकाबकविष्किरान् ।
वृथाकृसरसंयावपायसापूपशष्कुलीः ॥ १७३ ॥
कलविङ्कं सकाकोलं कुररं रज्जुदालकम् ।
जालपादान् खञ्जरीटानज्ञातांश्च मृगद्विजान् ॥१७४॥
चाषांश्च रक्तपादांश्च सौनं वल्लूरमेव च ।
मत्स्यांश्च कामतोजग्ध्वा सोपवासस्त्र्यहं वसेत् ॥१७५॥
पलाण्डुं विड्वराहञ्छत्राकं ग्रामकुक्कुटम् ।
लशुनं गृञ्जनञ्चैव जग्ध्वा चान्द्रायणं चरेत् ॥ १७६ ॥
भक्ष्याः पञ्चनखाः सेधागोधाकच्छपशल्लकाः ।
शशश्च मत्स्येष्वपि हि सिंहतुण्डकरोहिताः ॥ १७७ ॥
तथा पाठीनराजीवसशल्काश्च द्विजातिभिः ।
अतः शृणुत मांसस्य विधिं भक्षणवर्ज्जने ॥ १७८ ॥

प्राणात्यये तथा श्राद्धे प्रोक्षितं द्विजकाम्यया ।
देवान् पितॄन् समभ्यर्च्य खादन् मांसं न दोषभाक् ॥ १७९ ॥
वसेत् स नरके घोरे दिनानि पशुरोमभिः ।
सम्मितानि दुराचारो योऽहन्त्यविधिना पशून् ॥ १८० ॥
सर्व्वान् कामानवाप्नोति वाजिमेधफलं तथा ।
गृहेऽपि निवसन् विप्रो मुनिर्मांसस्य वर्जनात् ॥ १८१ ॥
सौवर्णराजताब्जानामूर्द्ध्वपात्रग्रहाश्मनाम् ।
शाकरज्जुमूलफलवासोविदलचर्म्मणाम् ॥ १८२ ॥
पात्राणां चमसानाञ्च वारिणा शुद्धिरिष्यते ।
चरुस्रुक्स्रुवसस्नेहपात्राण्युष्णेन वारिणा ॥ १८३ ॥
स्फ्यशूर्पाजिनधान्यानां मुषलोदूखलानसाम् ।
प्रोक्षणं संहतानाञ्च बहूनां चैव वाससाम् ॥ १८४ ॥
तक्षणं दारुशृङ्गास्थ्नां गोवालैः फलसम्भुवाम् ।
मार्ज्जनं यज्ञपात्राणां पाणिना यज्ञकर्म्मणि ॥ १८५ ॥
सोषैरुदकगोमूत्रैः शुद्ध्यत्याविककौशिकम् ।
सश्रीफलैरंशुपट्टं सारिष्टैः कुतपस्तथा ॥ १८६ ॥
सगौरसर्षपैः क्षौमं पुनःपाकान्महीमयम् ।
कारुहस्तः शुचिः पण्यं भैक्षं योषिन्मुखस्तथा ॥ १८७ ॥
भूशुद्धिर्मार्ज्जनाद्दाहात् कालाद्गोक्रमणात्तथा ।
सेकादुल्लेखनाल्लेपात् गृहं मार्ज्जनलेपनात् ॥ १८८ ॥
गोघ्राते‌ऽन्ने तथा कीटमक्षिकाकेशदूषिते ।
सलिलं भस्म मृद्वापि प्रक्षेप्तव्यं विशुद्धये ॥ १८९ ॥
त्रपुसीसकताम्राणां क्षाराम्लोदकवारिभिः ।
भस्माद्भिः कांस्यलोहानां शुद्धिः प्लावो द्रवस्य च ॥ १९० ॥

अमेध्याक्तस्य मृत्तोयैः शुद्धिर्गन्धापकर्षणात् ।
वाक्शस्तमम्बुनिर्णिक्तमज्ञातञ्च सदा शुचि ॥ १९१ ॥
शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम् ।
तथा मांसं श्वचाण्डालक्रव्यादादिनिपातितम् ॥ १९२ ॥
रश्मिरग्नीरजश्छाया गौरश्वोवसुधानिलः ।
विप्रुषोमक्षिका स्पर्शे वत्सः प्रस्रवणे शुचिः ॥ १९३ ॥
अजाश्वं मुखतो मेध्यं न गौर्न नरजामलाः ।
पन्थानश्च विशुध्यन्ति सोमसूर्य्यांशुमारुतैः ॥ १९४ ॥
मुखजा विप्रुषोमेध्यास्तथाचमनविन्दवः ।
श्मश्रु चास्यगतं दन्तसक्तं मुक्ता ततः शुचिः ॥ १९५ ॥
स्नात्वा पीत्वा क्षुते सुप्ते भुक्ते रथ्योपसर्पणे ।
आचान्तः पुनराचामेद्वासोविपरिधाय च ॥ १९६ ॥
रथ्याकर्द्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः ।
मारुतेनैव शुध्यन्ति पक्वेष्टकचितानि च ॥ १९७ ॥
तपस्तप्त्वाऽसृजद्ब्रह्मा ब्राह्मणान् वेदगुप्तये ।
तृप्त्यर्थं पितृदेवानां धर्म्मसंरक्षणाय च ॥ १९८ ॥
सर्वस्य प्रभवो विप्राः श्रुताध्ययनशालिनः ।
तेभ्यः क्रियापराः श्रेष्ठास्तेभ्योऽप्यध्यात्मवित्तमाः ॥ १९९ ॥
न विद्यया केवलया तपसा वापि पात्रता ।
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्त्तितम् ॥ २०० ॥
गोभूतिलहिरण्यादि पात्रे दातव्यमर्च्चितम् ।
नापात्रे विदुषा किञ्चिदात्मनः श्रेय इच्छता ॥ २०१ ॥
विद्यातपोभ्यां हीनेन नतु ग्राह्यः प्रतिग्रहः ।
गृह्णन् प्रदातारमधोनयत्यात्मानमेव च ॥ २०२ ॥

दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः।
याचितेनापि दातव्यं श्रद्धापूतञ्च शक्तितः॥ २०३ ॥
हेमशृङ्गा शफै रौप्यैः सुशीला वस्त्रसंयुता।
सकांस्यपात्रा दातव्या क्षीरिणी गौः सदक्षिणा॥२०४॥
दातास्याः स्वर्गमाप्नोति वत्सरान् रोमसम्मितान्।
कपिला चेत्तारयति भूयश्चा सप्तमं कुलम्॥ २०५ ॥
स वत्सारोम तुल्यानि युगान्युभयतोमुखीम्।
दातास्याः स्वर्गमाप्नोति पूर्वेण विधिना ददत्॥२०६॥
यावद्वत्सस्य पादौ द्वौ मुखं योनौ च दृश्यते।
तावद्गौः पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति॥ २०७ ॥
यथा कथञ्चिद्दत्त्वा गां धेनुं वाऽधेनुमेव वा।
अरोगामपरिक्लिष्टां दाता स्वर्गे महीयते॥ २०८ ॥
श्रान्तसम्वाहनं रोगि परिचर्य्या सुरार्चनम्।
पादशौचं द्विजोच्छिष्टमार्जनं गोप्रदानवत्॥२०९ ॥
भूदीपाश्चान्न वस्त्राम्भस्तिलसर्पिः प्रतिश्रयान्।
नैवेशिकं स्वर्णधुर्य्यं दत्त्वा स्वर्गे महीयते॥ २१० ॥
गृहधान्याभयोपानच्छत्रमाल्यानुलेपनम्।
यानं वृक्षं प्रियं शय्यां दत्त्वात्यन्तं सुखी भवेत्॥२११॥
सर्वदानमयं ब्रह्म प्रदानेभ्योऽधिकं यतः।
तद्ददत् समवाप्नोति ब्रह्मलोकमविच्युतम्॥ २१२ ॥
प्रतिग्रहसमर्थोऽपि नादत्ते यः प्रतिग्रहम्।
ये लोका दानशीलानां स तानाप्नोति पुष्कलान्॥२१३॥
कुशाः शाकं पयो मत्स्या गन्धाः पुष्पं दधि क्षितिः।
मांसं शय्यासनं धानाः प्रत्याख्येयं न वारि च॥२१४॥

अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्म्मणः ।
अन्यत्र कुलटाषण्ढपतितेभ्यस्तथा द्विषः ॥ २१५ ॥
देवातिथ्यर्च्चनकृते गुरुभृत्यादिवृत्तये ।
सर्व्वतः प्रतिगृह्णीयादात्मवृत्त्यर्थमेव च ॥ २१६ ॥
अमावास्याष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम् ।
द्रव्यं ब्राह्मणसम्पत्तिर्विषुवत् सूर्य्यसंक्रमः ॥ २१७ ॥
व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्य्ययोः ।
श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्त्तिताः ॥२१८॥
अग्र्याः सर्व्वेषु वेदेषु श्रोत्रियो ब्रह्मविद्युवा ।
वेदार्थविज्ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णकः ॥ २१९ ॥
ऋत्विक् स्वस्रीयजामातृयाज्यश्वशुरमातुलाः ।
त्रिणाचिकेतदौहित्रशिष्यसम्बन्धिबान्धवाः ॥ २२० ॥
कर्म्मनिष्ठास्तपोनिष्ठाः पञ्चाग्निर्ब्रह्मचारिणः ।
पितृमातृपराश्चैव ब्राह्मणाः श्राद्धसम्पदः ॥ २२१ ॥
रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा ।
अवकीर्णी कुण्डगोलौ कुनखी श्यावदन्तकः ॥ २२२ ॥
भृतकाध्यापकः क्लीबः कन्यादूष्यभिशस्तकः ।
मित्रध्रुक् पिशुनः सोमविक्रयी च विनिन्दकः ॥२२३॥
मातापितृगुरुत्यागी कुण्डाशी वृषलात्मजः ।
परपूर्व्वापतिः स्तेनः कर्म्मदुष्टाश्च निन्दिताः ॥ २२४ ॥
निमन्त्रयीत पूर्व्वेद्युर्ब्राह्मणानात्मवान् शुचिः ।
तैश्चापि संयतैर्भाव्यं मनोवाक्कायकर्म्मभिः ॥ २२५ ॥
अपराह्णे समभ्यर्च्य स्वागतेनागतांस्तु तान् ।
पवित्रपाणिराचान्तानासनेषूपवेशयेत् ॥ २२६ ॥

युग्मान् दैवे यथाशक्ति पित्र्येऽयुग्मांस्तथैव च ।
परिश्रिते शुचौ देशे दक्षिणाप्रवणे तथा ॥ २२७ ॥
द्वौ दैवे प्राक् त्रयः पित्र्य उदगेकैकमेव वा ।
मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम् ॥ २२८ ॥
पाणिप्रक्षालनं दत्त्वा विष्टरार्थं कुशानपि ।
आवाहयेदनुज्ञातो विश्वेदेवास इत्यृचा ॥ २२९ ॥
यवैरन्ववकीर्याथ भाजने सपवित्रके ।
शन्नो देव्या पयः क्षिप्त्वा यवोऽसीति यवांस्तथा ॥२३०॥
या दिव्या इति मन्त्रेण हस्ते त्वर्घ्यं विनिःक्षिपेत् ।
दत्त्वोदकं गन्धमाल्यं धूपं वासः सदीपकम् ॥ २३१ ॥
तथाच्छादनदानञ्च करशौचार्थमम्बु च ।
अपसव्यं ततः कृत्वा पितृणामप्रदक्षिणम् ॥
द्विगुणांस्तु कुशान् दत्त्वा ह्युशन्तस्त्वेत्यृचा पितॄन् २३२
आवाह्य तदनुज्ञातो जपेदायान्तु नस्ततः ।
यवार्थास्तु तिलैः कार्याः कुर्य्यादर्घ्यादिपूर्ववत् ॥२३३॥
दत्त्वार्घ्यं संस्रवांस्तेषां पात्रे कृत्वा विधानतः ।
पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः ॥२३४॥
अग्नौ करिष्यन्नादाय पृच्छत्यन्नं घृतप्लुतम् ।
कुरुष्वेत्यभ्यनुज्ञातो हुत्वाग्नौ पितृयज्ञवत् ॥ २३५ ॥
हुतशेषं प्रदद्यात्तु भाजनेषु समाहितः ।
यथा लाभोपपन्नेषु रौप्येषु तु विशेषतः ॥ २३६ ॥
दत्त्वान्नं पृथिवी पात्रमिति पात्राभिमन्त्रणम् ।
कृत्वेदं विष्णुरित्यन्ने द्विजाङ्गुष्ठं निवेशयेत् ॥ २३७ ॥
सव्याहृतिकां गायत्रीं मधुवाता इति त्र्यृचम् ।

जप्त्वा यथा सुखं वाच्यं भुञ्जीरंस्तेऽपि वाग्यताः ॥ २३८ ॥
अन्नमिष्टं हविष्यञ्च दद्यादक्रोधनोऽत्वरः ।
आतृप्तेस्तु पवित्राणि जप्त्वा पूर्वजपन्तथा ॥ २३९ ॥
अन्नमादाय तृप्ताः स्थ शेषं चैवानुमन्य च ।
तदन्नं विकिरेद्भूमौ दद्याच्चापः सकृत् सकृत् ॥ २४० ॥
सर्वमन्नमुपादाय सतिलं दक्षिणामुखः ।
उच्छिष्टसन्निधौ पिण्डान् प्रदद्यात् पितृयज्ञवत् ॥ २४१ ॥
मातामहानामप्येवं दद्यादाचमनं ततः ।
स्वस्ति वाच्यं ततः कुर्य्यादक्षय्योदकमेव च ॥ २४२ ॥
दत्त्वा तु दक्षिणां शक्त्या स्वधाकारमुदाहरेत् ।
वाच्यतामित्यनुज्ञातः प्रकृतेभ्यः स्वधोच्यताम् ॥ २४३ ॥
ब्रूयुरस्तु स्वधेत्येवं भूमौ सिञ्चेत्ततोजलम् ।
विश्वेदेवाश्च प्रीयन्तां विप्रैश्चोक्त इदं जपेत् ॥ २४४ ॥
दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च ।
श्रद्धा च नो माव्यगमद्बहु देयञ्च नोऽस्त्विति ॥ २४५ ॥
अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि ।
याचितारश्च नः सन्तु मा च याचिष्म कञ्चन ॥ २४६ ॥
इत्युक्त्वा तु प्रिया वाचः प्रणिपत्य विसर्जयेत् ।
वाजे वाजे इति प्रीतः पितृपूर्वं विसर्जनम् ॥ २४७ ॥
यस्मिंस्ते संस्रवाः पूर्वमर्घ्यपात्रे निवेशिताः ।
पितृपात्रं तदुत्तानं कृत्वा विप्रान् विसर्जयेत् ॥२४८॥
प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम् ।
ब्रह्मचारी भवेत्तान्तु रजनीं ब्राह्मणैः सह ॥२४९॥
एवं प्रदक्षिणं कृत्वा वृद्धौ नान्दीमुखान् पितॄन् ।

अशीत दधिकर्कन्धूमिश्रान् पिण्डान् यवैः क्रिया॥२५०॥
एकोद्दिष्टं दैवहीनमेकार्घ्यैकपवित्रकम्।
आवाहनाग्नौकरणरहितं ह्यपसव्यवत् ॥ २५१ ॥
उपतिष्ठतामित्यक्षय्यस्थाने विप्रविसर्जने ।
अभिरम्यतामिति वदेद्ब्रूयुस्तेऽभिरताः स्म ह ॥२४२॥
गन्धोदकतिलैर्युक्तं कुर्य्यात् पात्रचतुष्टयम् ।
अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥ २५३ ॥
ये समाना इति द्वाभ्यां शेषं पूर्ववदाचरेत् ।
एतत् सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि ॥ २५४ ॥
अर्व्वाक् सपिण्डीकरणं यस्य सम्वत्सराद्भवेत् ।
तस्याप्यन्नं सोदकुम्भं दद्यात् सम्वत्सरं द्विजे ॥२५५॥
मृताहनि तु कर्त्तव्यं प्रतिमासन्तु वत्सरम् ।
प्रतिसम्वत्सरञ्चैव आद्यमेकादशेऽहनि ॥ २५६ ॥
पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा ।
प्रक्षिपेत् सत्सु विप्रेषु द्विजोच्छिष्टं न मार्जयेत्॥२५७
हविष्यान्नेन वै मासं पायसेन तु वत्सरम् ।
मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः ॥२५८ ॥
ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम् ।
मासवृद्ध्या हि तृप्यन्ति दत्तैरिह पितामहाः ॥२५९
खड्गामिषं महाशल्कं मधु मुन्यन्नमेव च ।
लोहामिषं महाशाकं मांसं वार्ध्रीणसस्य च ॥२६०॥
यद्ददाति गयास्थश्च सर्वमानन्त्यमुच्यते ।
तथा वर्षात्रयोदश्यां मघासु च न संशयः ॥ २६१ ॥
कन्यां कन्यावेदिनश्च पशून् मुख्यान् सुतानपि ।

द्यूतं कृषिञ्च वाणिज्यं द्विशफैकशफांस्तथा ॥ २६२ ॥
ब्रह्मवर्च्चस्विनः पुत्रान् स्वर्णरूप्ये सकुप्यके ।
ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा ॥२६३॥
प्रतिपत्प्रभृतिष्वेतान् वर्जयित्वा चतुर्दशीम् ।
शस्त्रेण तु हताये वै तेभ्यस्तत्र प्रदीयते ॥ २६४ ॥
स्वर्गं ह्यपत्यमोजश्च शौर्य्यं क्षेत्रं बलं तथा ।
पुत्रान् श्रैष्ठ्यञ्च सौभाग्यं समृद्धिं मुख्यतां शुभम्२६५
प्रवृत्तचक्रताञ्चैव वाणिज्यं प्रभुतां तथा ।
अरोगित्वं यशो वीतशोकतां परमां गतिम् ॥ २६६॥
धनं विद्यां भिषक्सिद्धिं कुप्यं गा अप्यजाविकम् ।
अश्वानायुश्च विधिवद् यः श्राद्धं सम्प्रयच्छति ॥२६७॥
कृत्तिकादिभरण्यन्तं स कामानाप्नुयादिमान् ।
आस्तिकः श्रद्दधानश्च व्यपेतमदमत्सरः ॥ २६८ ॥
वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः ।
प्रीणयन्ति मनुष्याणां पितॄन् श्राद्धेन तर्पिताः ॥२६९॥
आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ।
प्रयच्छन्ति तथा राज्यं प्रीता नृणां पितामहाः ॥२७०॥
विनायकः कर्म्मविघ्नसिद्ध्यर्थं विनियोजितः ।
गणानामाधिपत्ये च रुद्रेण ब्रह्मणा तथा ॥ २७१ ॥
तेनोपसृष्टो यस्तस्य लक्षणानि निबोधत ।
स्वप्नेऽवगाहतेऽत्यर्थं जलं मुण्डांश्च पश्यति ॥ २७२ ॥
काषायवाससश्चैव क्रव्यादांश्चाधिरोहति ।
अन्त्यजैर्गर्दभैरुष्ट्रैः सहैकत्रावतिष्ठते ॥ २७३ ॥
व्रजन्नपि तथात्मानं मन्यतेऽनुगतं परैः ।

विमना विफलारम्भः संसीदत्यनिमित्ततः ॥ २७४ ॥
तेनोपसृष्टो लभते न राज्यं राजनन्दनः ।
कुमारी नच भर्त्तारमपत्यं नच गर्भिणी ॥ २७५ ॥
आचार्य्यत्वं श्रोत्रियश्च न शिष्योऽध्ययनं तथा ।
वणिग्लाभं नचाप्नोति कृषिञ्चैव कृषीवलः ॥ २७६ ॥
स्नपनं तस्य कर्त्तव्यं पुण्येऽह्नि विधिपूर्वकम् ।
गौरसर्षपकल्केन साज्येनोत्सादितस्य च ॥ २७७ ॥
सर्व्वौषधैः सर्व्वगन्धैः प्रलिप्तशिरसस्तथा ।
भद्रासनोपविष्टस्य स्वस्तिवाच्या द्विजाः शुभाः ॥ २७८ ॥
अश्वस्थानाद्गजस्थानाद्वल्मीकात् सङ्गमाद्ध्रदात् ।
मृत्तिकां रोचनां गन्धान् गुग्गुलुञ्चाप्सु निःक्षिपेत् ॥ २७९ ॥
या आहृता एकवर्णैश्चतुर्भिः कलशैर्ह्रदात् ।
चर्म्मण्यानडुहे रक्ते स्थाप्यं भद्रासनं तथा ॥ २८० ॥
सहस्राक्षं शतं धारमृषिभिः पावनं कृतम् ।
तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते ॥ २८१ ॥
भगन्ते वरुणो राजा भगं सूर्य्यो बृहस्पतिः ।
भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः ॥ २८२ ॥
यत्ते केशेषु दौर्भाग्यं सीमन्ते यश्च मूर्द्धनि ।
ललाटे कर्णयोरक्ष्णोरापस्तद्घ्नन्तु सर्वदा ॥ २८३ ॥
स्नातस्य सार्षपं तैलं स्रुवेणौडुम्बरेण च ।
जुहुयान्मूर्द्धनि कुशान् सव्येन परिगृह्य च ॥ २८४ ॥
मितश्च संमितश्चैव तथा शालकटङ्कटौ ।
कुष्माण्डो राजपुत्रश्चेत्यन्ते स्वाहासमन्वितैः ॥ २८५ ॥
नामभिर्बलिमन्त्रैश्च नमस्कार समन्वितैः ।

दद्याच्चतुष्पथे सूर्प्पे कुशानास्तीर्य्य सर्व्वतः ॥ २८६ ॥
कृताकृतांस्तण्डुलांश्च पललौदनमेव च ।
मत्स्यान् पक्कांस्तथैवामान् मांसमेतावदेव तु ॥२८७॥
पुष्पं चित्रं सुगन्धञ्च सुराञ्च त्रिविधामपि ।
मूलकं पूरिकापूपांस्तथैवेरण्डिकाः स्रजः ॥ २८८ ॥
दध्यन्नं पायसञ्चैव गुड़पिष्टं समोदकम् ।
एतान् सर्व्वानुपाहृत्य भूमौ कृत्वा ततः शिरः ॥२८९॥
विनायकस्य जननीमुपतिष्ठेत्ततोऽम्बिकाम् ।
दूर्व्वासर्षपपुष्पाणां दत्त्वार्घ्यं पूर्णमञ्जलिम् ॥ २९० ॥
रूपं देहि यशोदेहि भाग्यं भगवति ! देहि मे ।
पुत्रान् देहि धनं देहि सर्व्वान् कामांश्च देहि मे ॥२९१॥
ततः शुक्लाम्बरधरः शुक्लगन्धानुलेपनः ।
ब्राह्मणान् भोजयेद्दद्याद्वस्त्रयुग्मं गुरोरपि ॥ २९२ ॥
एवं विनायकं पूज्य ग्रहांश्चैव विधानतः ।
कर्म्मणां फलमाप्नोति श्रियञ्चाप्नोत्यनुत्तमाम् ॥ २९३ ॥
आदित्यस्य सदा पूजां तिलकं स्वामिनस्तथा ।
महागणपतेश्चैव कुर्व्वन् सिद्धिमवाप्नुयात् ॥ २९४ ॥
श्रीकामः शान्तिकामो वा ग्रहयज्ञं समाचरेत् ।
वृष्ट्यायुः पुष्टिकामो वा तथैवाभिचरन्नरीन् ॥ २९५॥
सूर्य्यः सोमो महीपुत्रः सोमपुत्रो वृहस्पतिः ।
शुक्रः शनैश्चरो राहुः केतुश्चेति ग्रहाः स्मृताः ॥२९६ ॥
ताम्रकात् स्फटिकाद्रक्तचन्दनात् स्वर्णकादुभौ ।
रजतादयसः सीसात् कांस्यात् कार्य्यग्रहाः क्रमात् ॥ २९७॥
स्वैर्व्वर्णैर्व्वा पटे लेख्या गन्धैर्मण्डलकेऽथवा ।

यथावर्णं प्रदेयानि वासांसि कुसुमानि च ॥ २९८ ॥
गन्धाश्च बलयश्चैव धूपो देयश्च गुग्गुलुः ।
कर्त्तव्या मन्त्रवन्तश्च चरवः प्रतिदैवतम् ॥ २९९ ॥
आकृष्णेन इमं देवा अग्निर्मूर्द्धा दिवः ककुत् ।
उद्बुध्यस्वेति च ऋचो यथासंख्यं प्रकीर्त्तिताः ॥ ३०० ॥
बृहस्पते अतियदर्य्यस्तथैवान्नात् परिस्रुतः ।
शन्नो देवीस्तथा काण्डात् केतुं कृण्वन्निमाः क्रमात् ॥ ३०१ ॥
अर्कः पलाशः खदिरस्त्वपामार्गोऽथ पिप्पलः ।
उडुम्बरः शमी दूर्व्वा कुशाश्च समिधः क्रमात् ॥ ३०२ ॥
एकैकस्य त्वष्टशतमष्टाविंशतिरेव वा ।
होतव्या मधुसर्पिर्भ्यां दध्ना क्षीरेण वा युता ॥ ३०३ ॥
गुड़ौदनं पायसञ्च हविष्यं क्षीरषाष्टिकम् ।
दध्योदनं हविश्चूर्णं मांसं चित्रान्नमेव च ॥ ३०४ ॥
दद्याद् ग्रहक्रमादेतद्द्विजेभ्यो भोजनं बुधः ।
शक्तितो वा यथा लाभं सत्कृत्य विधिपूर्व्वकम् ॥ ३०५ ॥
धेनुः शङ्खस्तथानड्वान् हेम वासो हयस्तथा ।
कृष्णा गौरायसं छाग एता वै दक्षिणाः क्रमात् ॥ ३०६ ॥
यश्च यस्य यदा दुःस्थः स तं यत्नेन पूजयेत् ।
ब्रह्मणैषां वरो दत्तः पूजिताः पूजयिष्यथ ॥ ३०७ ॥
ग्रहाधीना नरेन्द्राणा मुच्छ्रायाः पतनानि च ।
भावाभावौ च जगतस्तस्मात् पूज्यतमाः स्मृताः ॥ ३०८ ॥
महोत्साहः स्थूललक्षः कृतज्ञो वृद्धसेवकः ।
विनीतः सत्वसम्पन्नः कुलीनः सत्यवाक् शुचिः ॥ ३०९
अदीर्घसूत्रः स्मृतिमानक्षुद्रोऽपरुषस्तथा ।

धार्म्मिकोऽव्यसनश्चैव प्राज्ञः शूरो रहस्यवित् ॥३१० ॥
स्वरन्ध्रगोप्तान्वीक्षिक्यां दण्डनीत्यां तथैव च ।
विनीतस्त्वथ वार्त्तायां त्रय्याञ्चैव नराधिपः ॥३११ ॥
स मन्त्रिणः प्रकुर्व्वीत प्राज्ञान् मौलान् स्थिरान् शुचीन् ।
तैः सार्द्धं चिन्तयेद्राज्यं विप्रेणाथ ततः स्वयम् ॥३१२॥
पुरोहितञ्च कुर्व्वीत दैवज्ञमुदितोदितम् ।
दण्डनीत्याञ्च कुशलमथर्व्वाङ्गिरसे तथा ॥ ३१३ ॥
श्रौतस्मार्त्तक्रियाहेतोर्वृणुयादृत्विजस्तथा ।
यज्ञांश्चैव प्रकुर्वीत विधिवद्भूरिदक्षिणान् ॥ ३१४ ॥
भोगांश्च दद्याद्विप्रेभ्यो वसूनि विविधानि च ।
अक्षयोऽयं निधी राज्ञां यद्विप्रेषूपपादितम् ॥ ३१५ ॥
अस्कन्नमव्ययञ्चैव प्रायश्चित्तैरदूषितम् ।
अग्नेः सकाशाद्विप्रास्यं पूतं श्रेष्ठमिहोच्यते ॥ ३१६ ॥
धर्म्मेणालब्धमीहेत लब्धं यत्नेन पालयेत् ।
पालितं वर्द्धयेन्नीत्या वृद्धं पात्रेषु निःक्षिपेत् ॥३१७॥
दद्याद्भूमिं निबन्धं वा कृत्वा लेख्यञ्च कारयेत् ।
आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः ॥ ३१८ ॥
पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितम् ।
अभिलेख्यात्मनो वंश्यानात्मानञ्च महीपतिः ॥ ३१९॥
प्रतिग्रहपरीमाणं दानाच्छेदोपवर्णनम् ।
स्वहस्तकालसम्पन्नं शासनं कारयेत् स्थिरम् ॥३२०॥
रम्यं पशव्यमाजीव्यं जाङ्गलं देशमावसेत् ।
तत्र दुर्गाणि कुर्व्वीत जनकोषात्मगुप्तये ॥ ३२१ ॥
तत्र तत्र च निष्णाताध्यक्षान् कुशलान् शुचीन् ।

प्रकुर्य्याद्दायकर्म्मान्तव्ययकर्म्मसु चोद्य तान् ॥ २२२॥
नातः परतरो धर्म्मो नृपाणां यदुपार्जितम् ।
विप्रेभ्यो दीयते द्रव्यं प्रजाभ्यश्चाभयं तथा ॥ २२३ ॥
य आहवेषु बध्यन्ते भूम्यर्थमपराङ्मुखाः ।
अकूटैरायुधैर्यान्ति ते स्वर्गं योगिनो यथा ॥ २२४ ॥
पदानि क्रतुतुल्यानि भग्नेष्वविनिवर्त्तिनाम् ।
राजा सुकृतमादत्ते हतानां विपलायिनाम् ॥२२५ ॥
तवाहं वादिनं क्लीवं निर्हेतिं परसङ्गतम् ।
न हन्याद्विनिवृत्तञ्च युद्धप्रेक्षणकादिकम् ॥ २२६ ॥
कृतरक्षः समुत्थाय पश्येदायव्ययौ स्वयम् ।
व्यवहारांस्ततो दृष्ट्वा स्नात्वा भुञ्जीत कामतः ॥२२७॥
हिरण्यं व्यापृतानीतं भाण्डागारेषु निःक्षिपेत् ।
पश्येच्चारांस्ततो दूतान् प्रेरयेन्मन्त्रिसंयुतः ॥ २२८ ॥
ततः स्वैरविहारी स्यान्मन्त्रिभिर्व्वा समागतः ।
बलानां दर्शनं कृत्वा सेनान्या सह चिन्तयेत् ॥२२९॥
सन्ध्यामुपास्य शृणुयाच्चाराणां गूढभाषितम् ।
गीतनृत्यैश्च भुञ्जीत पठेत् स्वाध्यायमेव च ॥ २३० ॥
संविशेत्तूर्य्यघोषेण प्रतिबुध्येत्तथैव च ।
शास्त्राणि चिन्तयेद्बुद्ध्या सर्वकर्त्तव्यतास्तथा ॥ २३१ ॥
प्रेषयेच्च ततश्चारान् स्वेषु चान्येषु सादरम् ।
ऋत्विक्पुरोहिताचार्य्यैराशीर्भिरभिनन्दितः ॥२३२ ॥
दृष्ट्वा ज्योतिर्विदो वैद्यान् दद्याद्गां काञ्चनं महीम् ।
नैवेशिकानि च तथा श्रोत्रियाणां गृहाणि च ॥२३३॥
ब्राह्मणेषु क्षमी स्निग्धेष्वजिह्मः क्रोधनोऽरिषु ।

स्याद्राजा भृत्यवर्गेषु प्रजासु च यथा पिता ॥२२४॥
पुण्यात् षड्भागमादत्ते न्यायेन परिपालयन्।
सर्वदानाधिकं यस्मात् प्रजानां परिपालनम् ॥२२५॥
चाटुतस्करदुर्वृत्तमहासाहसिकादिभिः।
पीड्यमानाः प्रजा रक्षेत् कायस्थैश्च विशेषतः ॥ २२६ ॥
अरक्ष्यमाणाः कुर्वन्ति यत् किञ्चित् किल्बिषं प्रजाः।
तस्मात्तु नृपतेरर्द्धं यस्माद् गृह्णात्यसौ करान् ॥ २२७ ॥
ये राष्ट्राधिकृतास्तेषां चारैर्ज्ञात्वा विचेष्टितम्।
साधून् सम्पालयेद्राजा विपरीतांस्तु घातयेत् ॥ २२८॥
उत्कोचजीविनो द्रव्यहीनान् कृत्वा प्रवासयेत्।
सम्मानदानसत्कारैः श्रोत्रियान् वासयेत् सदा॥२२९
अन्यायेन नृपो राष्ट्रात् स्वकोषं योऽभिवर्द्धयेत्।
सोऽचिराद्विगतश्रीको नाशमेति सबान्धवः ॥ २४० ॥
प्रजापीड़नसन्तापसमुद्भूतो हुताशनः।
राज्ञः कुलं श्रियं प्राणान् नादग्ध्वा विनिवर्त्तते॥२४१॥
यएव धर्म्मो नृपतेः स्वराष्ट्रपरिपालने।
तमेव कृत्स्नमाप्नोति परराष्ट्रं वशं नयन् ॥ २४२ ॥
यस्मिन् देशे य आचारो व्यवहारः कुलस्थितिः।
तथैव परिपाल्योऽसौ यदा वशमुपागतः ॥ २४३ ॥
मन्त्रमूलं यतो राज्यमतो मन्त्रं सुरक्षितम्।
कुर्य्याद्यथान्ये न विदुः कर्म्मणामाफलोदयात॥२४४॥
अरिर्मित्रमुदासीनोऽनन्तरस्तत् परः परः।
क्रमशो मण्डलं चिन्त्यं सामादिभिरनुक्रमैः ॥ २४५ ॥
उपायाः साम दानञ्च भेदो दण्डस्तथैव।

सम्यक् प्रयुक्ताः सिद्धेयुर्दण्डस्त्वगतिका गतिः ॥३४६॥
सन्धिञ्च विग्रहं यानमासनं संश्रयं तथा।
द्वैधीभावं गुणानेतान् यथावत् परिकल्पयेत् ॥३४७॥
यदा शस्यगुणोपेतं परराष्ट्रं तदा व्रजेत्।
परश्च हीनआत्मा च हृष्टवाहनपूरुषः ॥ ३४८ ॥
दैवे पुरुषकारे च कर्म्मसिद्धिर्व्यवस्थिता।
तत्र दैवमभिव्यक्तं पौरुषं पौर्वदेहिकम् ॥ ३४९ ॥
केचिद्दैवात् स्वभावाच्च कालात् पुरुषकारतः।
संयोगे केचिदिच्छन्ति फलं कुशलबुद्धयः ॥ ३५० ॥
यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत्।
एवं पुरुषकारेण विना दैवं न सिद्ध्यति ॥ ३५१ ॥
हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरा यतः।
अतोयतेत तत्प्राप्तौ रक्षेत् सत्यं समाहितः ॥३५२॥
स्वाम्यमात्यो जनोदुर्गं कोषो दण्डस्तथैवच।
मित्राण्येताः प्रकृतयो राज्यं सप्ताङ्गमुच्यते ॥ ३५३ ॥
तदवाप्य नृपोदण्डं दुष्टेषु निपातयेत्।
धर्मोहि दण्डरूपेण ब्रह्मणा निर्मितः पुरा ॥ ३५४ ॥
स नेतुं न्यायतोऽशक्यो लुब्धेनाकृतबुद्धिना।
सत्यसन्धेन शुचिना सुसहायेन धीमता ॥ ३५५ ॥
यथाशास्त्रं प्रयुक्तः सन् सदेवासुरमानुषम्।
जगदानन्दयेत् सर्वमन्यथा तु प्रकोपयेत् ॥ ३५६ ॥
अधर्म्मदण्डनं स्वर्गकीर्त्तिलोकविनाशनम्।
सम्यक् च दण्डनं राज्ञः स्वर्गकीर्त्तिजयावहम् ॥३५७
अपि भ्राता सुतोऽर्घ्यो वा श्वशुरो मातुलोऽपिवा

नाऽदण्ड्यो नाम राज्ञोऽस्ति धर्म्माद्विचलितः स्वकात्॥३५८

योऽदण्ड्यान् दण्डयेद्राजा सम्यग्वध्यांश्च घातयेत् ।

इष्टं स्यात् क्रतुभिस्तेन सहस्रशतदक्षिणैः ॥ ३५९ ॥

इति संचिन्त्य नृपतिः क्रतुतुल्यफलं पृथक् ।

व्यवहारान् स्वयं पश्येत् सभ्यैः परिवृतोऽन्वहम्॥३६०

कुलानि जातीः श्रेणीश्च गणान् जानपदांस्तथा ।

स्वधर्म्मचलितान्राजा विनीय स्थापयेत् पथि ॥ ३६१॥

जालसूर्य्यमरीचिस्थं त्रसरेणूरजः स्मृतम् ।

तेऽष्टौ लिक्षा तु तास्तिस्रो राजसर्षप उच्यते ॥ ३६२ ॥

गौरस्तु ते त्रयः षट् ते यवो मध्यस्तु ते त्रयः ।

कृष्णलः पञ्च ते माषस्ते सुवर्णस्तु षोड़श ॥ ३६३ ॥

पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्त्तितम् ।

द्वे कृष्णले रूप्यमाषो धरणं षोड़शैव ते ॥ ३६४ ॥

शतमानस्तु दशभिर्धरणैः पलमेव च ।

निष्कः सुवर्णाश्चत्वारः कार्षिकस्ताम्रिकः पणः ॥३६५॥

साशीतिः पणसाहस्रो दण्ड उत्तमसाहसः ।

तदर्द्धं मध्यमः प्रोक्तस्तदर्द्धमधमः स्मृतः ॥ ३६६ ॥

धिग्दण्डस्त्वथ वाग्दण्डो धनदण्डो वधस्तथा ।

योज्या व्यस्ताः समस्ता वा अपराधवशादिमे ॥३६७ ॥

ज्ञात्वापराधं देशञ्च कालं बलमथापि वा ।

वयः कर्म्म च वित्तञ्च दण्डं दण्ड्येषु पातयेत् ॥३६८ ॥

इति याज्ञवल्कीये धर्म्मशास्त्रे आचारो नाम प्रथमोऽध्यायः ॥

अथ द्वितीयोऽध्यायः व्यवहारान् नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह ।

धर्म्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ॥ १ ॥

महापातकजान् घोरान्नरकान् प्राप्य गर्हितान् ।
कर्म्मक्षयात् प्रजायन्ते महापातकिनस्त्विह ॥ २०६ ॥
मृगश्वशूकरोष्ट्राणां ब्रह्महा योनिमृच्छति ।
खरपुक्कशवेणानां सुरापो नात्रसंशयः ॥ २०७ ॥
कृमिकीटपतङ्गत्वं स्वर्णहारी समाप्नुयात् ।
तृणगुल्मलतात्वञ्च क्रमशो गुरुतल्पगः ॥ २०८ ॥
ब्रह्महा क्षयरोगी स्यात् सुरापः श्यावदन्तकः ।
हेमहारी तु कुनखी दुश्चर्म्मा गुरुतल्पगः ॥ २०९ ॥
योयेन संवसत्येषां स तल्लिङ्गोऽभिजायते ।
अन्नहर्त्तामयावी स्यान्मूको वागपहारकः ॥ २१० ॥
धान्यमिश्रोऽतिरिक्ताङ्गः पिशुनः पूतिनासिकः ।
तैलहृत्तैलपायी स्यात् पूतिवक्त्रस्तु सूचकः ॥ २११ ॥
परस्य योषितं हृत्वा ब्रह्मस्वमपहृत्य च ।
अरण्ये निर्ज्जने घोरे भवति ब्रह्मराक्षसः ॥ २१२ ॥
हीनजातौ प्रजायेत पररत्नापहारकः ।
पत्रशाकं शिखी हृत्वा गन्धांश्छुच्छुन्दरिः शुभान् ॥ २१३ ॥
मूषिको धान्यहारी स्याद्यानमुष्ट्रं फलं कपिः ।
जलं प्लवः पयः काको गृहकारी ह्युपस्करम् ॥ २१४ ॥
मधु दंशः फलं गृध्रो गां गोधाग्निं वकस्तथा ।
श्वित्री वस्त्रं श्वा रसन्तु चीरी लवणहारकः ॥२१५॥
प्रदर्शनार्थमेतत्तु मयोक्तं स्तेयकर्म्मणि ।
द्रव्यप्रकारा हि यथा तथैव प्राणिजातयः ॥ २१६ ॥
यथाकर्म्मफलं प्राप्य तिर्य्यक्त्वं कालपर्य्ययात् ।
जायन्ते लक्षणभ्रष्टा दरिद्राः पुरुषाधमाः ॥ २१७ ॥

ततो निष्कल्मषीभूताः कुले महति योगिनः ।
जायन्ते विद्ययोपेता धनधान्यसमन्विताः ॥ २१८ ॥
विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥ २१९ ॥
तस्मात्तेनेह कर्त्तव्यं प्रायश्चित्तं विशुद्धये ।
एवमस्यान्तरात्मा च लोकश्चैव प्रसीदति ॥ २२० ॥
प्रायश्चित्तमकुर्व्वाणाः पापेषु निरता नराः ।
अपश्चात्तापिनः कष्टान्नरकान् यान्ति दारुणान् ॥२२१
तामिस्रं लोहशङ्कुञ्च महानिरयशाल्मली ।
रौरवं कुड्मलं पूतिमृत्तिकं कालसूत्रकम् ॥ २२२ ॥
संघातं लोहितोदञ्च सविषं सम्प्रतापनम् ।
महानरककाकोलं संजीवनमहापथम् ॥ २२३ ॥
अवीचिमन्धतामिस्रं कुम्भीपाकं तथैव च ।
असिपत्रवनञ्चैव तापनञ्चैकविंशकम् ॥ २२४ ॥
महापातकजैर्घोरैरुपपातकजैस्तथा ।
अन्विता यान्त्यचरितप्रायश्चित्ता नराधमाः ॥ २२५ ॥
प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत् ।
कामतो व्यवहार्य्यस्तु वचनादिह जायते ॥ २२६ ॥
ब्रह्महा मद्यपः स्तेनो गुरुतल्पग एव च ।
एते महापातकिनो यश्च तैः सह संवसेत् ॥ २२७॥
गुरूणामध्यधिक्षेपो वेदनिन्दा सुहृद्वधः ।
ब्रह्महत्यासमं ज्ञेयमधीतस्य च नाशनम् ॥ २२८ ॥
निषिद्धभक्षणं जैह्म्यमुत्कर्षे च वचोऽनृतम् ।
रजस्वलामुखास्वादः सुरापानसमानि तु ॥ २२९ ॥

अश्वरत्नमनुष्यस्त्रीभूधेनुहरणं तथा ।
निःक्षेपस्य च सर्व्वं हि सुवर्णस्तेयसम्मितम् ॥ २३० ॥
सखिभार्य्याकुमारीषु स्वयोनिष्वन्त्यजासु च ।
सगोत्रासु सुतस्त्रीषु गुरुतल्पसमं स्मृतम् ॥ २३१ ॥
पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि ।
मातुः सपत्नीं भगिनीमाचार्य्यतनयां तथा ॥ २३२ ॥
आचार्य्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः ।
छित्त्वा लिङ्गं बधस्तस्य सकामायाःस्त्रिया अपि २३३॥
गोवधो व्रात्यता स्तेयमृणानाञ्चानपक्रिया ।
अनाहिताग्निताऽपण्यविक्रयः परिवेदनम् ॥ २३४ ॥
भृताद्ध्ययनादानं भृतकाध्यापनं तथा ।
पारदार्य्यं पारिवित्त्यं वार्द्धुष्यं लवणक्रिया ॥ २३५ ॥
स्त्रीशूद्रविट्क्षत्रबधो निन्दितार्थोपजीवनम् ।
नास्तिक्यं व्रतलोपश्च सुतानाञ्चैव विक्रयः ॥ २३६ ॥
धान्यकुप्यपशुस्तेयमयाज्यानाञ्च याजनम् ।
पितृमातृगुरुत्यागस्तड़ागारामविक्रयः ॥ २३७ ॥
कन्यासंदूषणञ्चैव परिविन्दकयाजनम् ।
कन्याप्रदानं तस्यैव कौटिल्यं व्रतलोपनम् ॥ २३८ ॥
आत्मार्थे च क्रियारम्भो मद्यपस्त्रीनिषेवणम् ।
स्वाध्यायाग्निसुतत्यागो बान्धवत्याग एव च ॥२३९ ॥
इन्धनार्थं द्रुमच्छेदः स्त्रीहिंसौषधजीवनम् ।
हिंसायन्त्रविधानञ्च व्यसनान्यात्मविक्रयः ॥ २४० ॥
असच्छास्त्राधिगमनमाकरेष्वधिकारिता ।
भार्य्याया विक्रयश्चैषामेकैकमुपपातकम् ॥२४१ ॥

शिरःकपाली ध्वजवान् भिक्षाशी कर्म्म वेदयन् ।
ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात्॥२४२॥
ब्राह्मणस्य परित्राणाद्गवां द्वादशकस्य वा ।
तथाश्वमेधावभृथस्नानाद्वा शुद्धिमाप्नुयात् ॥ २४३ ॥
दीर्घतीव्रामयग्रस्तं ब्राह्मणं गामथापि वा ।
दृष्ट्वा पथि निरातङ्कं कृत्वा वा ब्रह्महा शुचिः ॥२४४॥
आनीय विप्रसर्वस्वं हृतं घातित एव वा ।
तन्निमित्तं क्षतः शस्त्रैर्जीवन्नपि विशुद्ध्यति ॥ २४५ ॥
लोमभ्यः स्वाहेत्येवं हि लोमप्रभृति वै तनुम् ।
मज्जान्तां जुहुयाद्वापि मन्त्रैरेभिर्यथाक्रमम् ॥ २४६ ॥
संग्रामे वा हतो लक्ष्यभूतः शुद्धिमवाप्नुयात् ।
मृतकल्पः प्रहारार्त्तो जीवन्नपि विशुद्ध्यति ॥ २४७॥
अरण्ये नियतो जप्त्वा त्रिर्वै वेदस्य संहिताम् ।
मुच्यते वा मिताशीत्वा प्रतिस्रोतः सरस्वतीम् ॥ २४८ ॥
पात्रे धनं वा पर्य्याप्तं दत्त्वा शुद्धिमवाप्नुयात् ।
आदातुश्च विशुद्ध्यर्थमिष्टिर्वैश्वानरी स्मृता ॥ २४९ ॥
यागस्थक्षत्रविड्घाती चरेद्ब्रह्महणो व्रतम् ।
गर्भहा च यथावर्णं तथात्रेयीनिषूदकः ॥ २५० ॥
चरेद्व्रतमहत्वापि घातार्थञ्चेत् समागतः ।
द्विगुणं सवनस्थे तु ब्राह्मणे व्रतमादिशेत् ॥ २५१ ॥
सुराम्बुघृतगोमूत्रपयसामग्निसन्निभम् ।
सुरापोऽन्यतमं पीत्वा मरणाच्छुद्धिमृच्छति ॥ २५२ ॥
वालवासा जटी वापि ब्रह्महत्याव्रतञ्चरेत् ।
पिण्याकं वा कणां वापि भक्षयेत्त्रिसमानिशि ॥२५३॥

अज्ञानात्तु सुरां पीत्वा रेतो विण्मूत्रमेव वा ।
पुनःसंस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ २५४ ॥
पतिलोकं न सा याति ब्राह्मणी या सुरां पिबेत् ।
इहैव तु शुनी गृध्री सूकरी चाभिजायते ॥ २५५ ॥
ब्राह्मणःस्वर्णहारी तु राज्ञे मूषलमर्पयेत् ।
स्वकर्म्म ख्यापयंस्तेन हतो मुक्तोऽपि वा शुचिः ॥२५६॥
अनिवेद्य नृपे शुद्धेत् सुरापव्रतमाचरन् ।
आत्मतुल्यं सुवर्णं वा दद्याद्वा विप्रतुष्टिकृत् ॥ २५७॥
तप्तेऽयःशयने सार्द्धमायस्या योषिता स्वपेत् ।
गृहीत्वोत्कृत्य वृषणौ नैर्ऋत्यामुत्सृजेत्तनुम् ॥२५८॥
प्राजापत्यं चरेत् कृच्छ्रं समा वा गुरुतल्पगः ।
चान्द्रायणं वा त्रीन्मासानभ्यस्यन् वेदसंहिताम्॥२५९
एभिस्तु संवसेद् यो वै वत्सरं सोऽपि तत्समः ।
कन्यां समुद्वहेदेषां सोपवासामकिञ्चनाम् ॥ २६० ॥
चान्द्रायणं चरेत् सर्व्वानवकृष्टान्निहत्य तु ।
शूद्रोऽधिकारहीनोऽपि कालेनानेन शुध्यति ॥ २६१ ॥
मिथ्याभिशंसिनो दोषो द्विगुणोऽनृतवादिनः ।
मिथ्याभिशस्तपापञ्च समादत्ते मृषावदन् ॥ २६२ ॥
पञ्चगव्यं पिबेद् गोघ्नो मासमासीत संयतः ।
गोष्ठेशयो गोऽनुगामी गोप्रदानेन शुद्ध्यति ॥ २६३ ॥
कृच्छ्रं चैवातिकृच्छ्रञ्च चरेद्वापि समाहितः ।
दद्यात्त्रिरात्रं वोपोष्य वृषभैकादशास्तु गाः ॥ २६४ ॥
उपपातकशुद्धिः स्यादेवञ्चान्द्रायणेन वा ।
पयसा वापि मासेन पराकेणाथवा पुनः ॥ २६५ ॥

ऋषभैकसहस्रा गा दद्यात् क्षत्रबधे पुमान् ।
ब्रह्महत्याव्रतं वापि वत्सरत्रितयं चरेत् ॥ २६६ ॥
वैश्यहाब्दं चरेदेतद्दद्याद्वैकशतं गवाम् ।
षण्मासान् शूद्रहा ह्येतद्दद्याद्धेनूर्दशापि वा ॥ २६७ ॥
दुर्वृत्ता ब्रह्मविट्क्षत्रशूद्रयोषाः प्रमाप्य तु ।
दृतिं धनुर्वस्तमविं क्रमाद्दद्याद्विशुद्धये ॥ २६८ ॥
अप्रदुष्टां स्त्रियं हत्वा शूद्रहत्याव्रतञ्चरेत् ।
अस्थिमतां सहस्रञ्च तथानस्थिमतामनः ॥ २६९ ॥
मार्ज्जारगोधानकुलमण्डूकश्वपतत्रिणः ।
हत्वा त्र्यहं पिवेत् क्षीरं कृच्छ्रं वा पादिकं चरेत् ॥२७०
गजे नीलवृषाः पञ्च शुके वत्सो द्विहायनः ।
खराजमेषेषु वृषो देयः क्रौञ्चे त्रिहायणः ॥ २७१ ॥
हंसश्येनकपिक्रव्याज्जलस्थलशिखण्डिनः ।
भासञ्च हत्वा दद्याद्गामक्रव्यादस्तु वत्सिकाम् ॥ २७२
उरगेष्वायसो दण्डः पण्डके त्रपुसीसकम् ।
कोले घृतघटो देय उष्ट्रे गुञ्जा हयेऽंशुकम् ॥ २७३ ॥
तित्तिरौ तु तिलद्रोणं गजादीनामशक्नुवन् ।
दानं दातुञ्चरेत् कृच्छ्रमेकैकस्य विशुद्धये ॥ २७४ ॥
फलपुष्पान्नरसजसत्वघाते घृताशनम् ।
किञ्चित्सास्थिबधे देयं प्राणायामस्त्वनस्थिके ॥ २७५॥
वृक्षगुल्मलतावीरुच्छेदने जप्यमृक्शतम् ।
स्यादोषधिवृथाच्छेदे क्षीराशी गोनुगो दिनम् ॥ २७६
पुंश्चलीवानरखरैर्दष्टश्वोष्ट्रादिवायसैः ।
प्राणायामं जले कृत्वा घृतं प्राश्य विशुद्ध्यति ॥२७७

यन्मेऽद्यरेत इत्याभ्यां स्कन्नं रेतोऽनुमन्त्रयेत् ।
स्तनान्तरं भ्रुवोर्मध्यं तेनानामिकया स्पृशेत् ॥२७८
मयि तेज इति च्छायां स्वां दृष्ट्वाम्बुगतां जपेत् ।
सावित्रीमशुचौ दृष्टे चापल्ये चानृतेऽपि च ॥ २७९
अवकीर्णी भवेद् गत्वा ब्रह्मचारी तु योषितम् ।
गर्द्दभं पशुमालभ्य नैर्ऋत्यं स विशुद्ध्यति ॥ २८० ॥
भैक्षाग्निकार्य्ये त्यक्त्वा तु सप्तरात्रमनातुरः ।
कामावकीर्ण इत्याभ्यां जुहुयादाहुतिद्वयम् ॥ २८१ ॥
उपस्थानं ततः कुर्य्यात् समासिञ्चन्त्वनेन तु ।
मधुमांसाशने कार्य्यः कृच्छ्रः शेषव्रतानि च ॥ २८२ ॥
प्रतिकूलं गुरोः कृत्वा प्रसाद्यैव विशुद्ध्यति ।
कृच्छ्रत्रयं गुरुः कुर्य्यान्म्रियेत प्रहितो यदि ॥ १८३॥
क्रियमाणोपकारे तु मृते विप्रे न पातकम् ।
विपाके गोवृषाणाञ्च भेषजाग्निक्रियासु च ॥ २८४ ॥
महापापोपपापाभ्यां योऽभिशंसेन्मृषापरम् ।
अब्भक्षो मासमासीत सजापी नियतेन्द्रियः ॥२८५ ॥
अभिशस्तो मृषा कृच्छ्रं चरेदाग्नेयमेव वा ।
निर्वपेच्च पुरोडाशं वायव्यं पशुमेव वा ॥ २८६ ॥
अनियुक्तो भ्रातृजायां गच्छंश्चान्द्रायणञ्चरेत् ।
त्रिरात्रान्ते घृतं प्राश्य गत्वोदक्यां विशुद्ध्यति ॥२८७
त्रीन् कृच्छ्रानाचरेद् व्रात्ययाजकोऽभिचरन्नपि ।
वेदप्लावी यवाश्यब्दं त्यक्त्वा च शरणागतम् ॥ २८८ ॥
गोष्ठे वसन् ब्रह्मचारी मासमेकं पयोव्रतः ।
गायत्रीजप्यनिरतो मुच्यतेऽसत्प्रतिग्रहात् ॥ २८९ ॥

प्राणायामी जले स्नात्वा खरयानोष्ट्रयानगः ।
नग्नः स्नात्वा च भुक्त्वा च गत्वा चैव दिवा स्त्रियम् २९० ॥
गुरुं त्वंकृत्य हुंकृत्य विप्रं निर्जित्य वादतः ।
बद्ध्वा वा वाससा क्षिप्रं प्रसाद्योपवसेद्दिनम् ॥ २९१ ॥
विप्रदण्डोद्यमे कृच्छ्रस्त्वतिकृच्छ्रो निपातने ।
कृच्छ्रातिकृच्छ्रोऽसृक्पाते कृच्छ्रोऽभ्यन्तरशोणिते २९२
देशं कालं वयः शक्तिं पापं चावेक्ष्य यत्नतः ।
प्रायश्चित्तं प्रकल्प्यं स्याद् यत्र चोक्ता न निष्कृतिः ॥ २९३ ॥
दासीकुम्भं बहिर्ग्रामान्निनयेयुः स्वबान्धवाः ।
पतितस्य बहिः कुर्युः सर्वकार्येषु चैव तम् ॥ २९४ ॥
चरितव्रत आयाते निनयेरन्नवं घटम् ।
जुगुप्सेरन्न चाप्येनं संवसेयुश्च सर्वशः ॥ २९५ ॥
पतितानामेष एव विधिः स्त्रीणां प्रकीर्त्तितः ।
वासो गृहान्तिके देयमन्नं वासः सरक्षणम् ॥ २९६ ॥
नीचाभिगमनं गर्भपातनं भर्तृहिंसनम् ।
विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुवम् ॥ २९७ ॥
शरणागतबालस्त्रीहिंसकान् संवसेन्न तु ।
चीर्णव्रतानपि सदा कृतघ्नसहितानिमान् ॥ २९८ ॥
घटेऽपवर्जिते ज्ञातिमध्यस्थो यवसं गवाम् ।
प्रदद्यात् प्रथमं गोभिः सत्कृतस्य हि सत्क्रिया २९९
विख्यातदोषः कुर्वीत पर्षदोऽनुमतं व्रतम् ।
अनभिख्यातदोषस्तु रहस्यं व्रतमाचरेत् ॥ ३०० ॥
त्रिरात्रोपोषितो जप्त्वा ब्रह्महा त्वघमर्षणम् ।
अन्तर्जले विशुद्ध्येत गां दत्त्वा च पयस्विनीम् ॥ ३०१ ॥

लोमभ्यः स्वाहेत्यथवा दिवसं मारुताशनः ।
जले स्थित्वाभिजुहुयाच्चत्वारिंशद्घृताहुतीः ॥ २०२ ॥
त्रिरात्रोपोषितो भूत्वा कुष्माण्डीभिर्घृतं शुचिः ।
सुराप: स्वर्णहारी तु रुद्रजापी जले स्थितः ॥ २०३
सहस्रशीर्षाजापी तु मुच्यते गुरुतल्पगः ।
गौर्देया कर्म्मणोऽस्यान्ते पृथगेभिः पयस्विनी ॥ २०४ ॥
प्राणायामशतं कार्य्यं सर्वपापापनुत्तये ।
उपपातकजातानामनादिष्टस्य चैव हि ॥ २०५ ॥
ओङ्काराभिष्टुतं सोमसलिलं पावनं पिबेत् ।
कृत्वा तु रेतोविण्मूत्रप्राशनञ्च द्विजोत्तमः ॥ २०६ ॥
निशायां वा दिवा वापि यदज्ञानकृतं भवेत् ।
त्रैकाल्यसन्ध्याकरणात्तत् सर्वं विप्रणश्यति ॥ २०७ ॥
शुक्रियारण्यकजपो गायत्र्याश्च विशेषतः ।
सर्वपापहरा ह्येते रुद्रैकादशिनी तथा ॥ २०८ ॥
यत्र यत्र च संकीर्णमात्मानं मन्यते द्विजः ।
तत्र तत्र तिलैर्होमो गायत्र्या वाचनन्तथा ॥२०९ ॥
वेदाभ्यासरतं क्षान्तं महायज्ञक्रियारतम् ।
न स्पृशन्तीह पापानि महापातकजान्यपि ॥ २१० ॥
वायुभक्षो दिवा तिष्ठन्रात्रिं नीत्वाप्सु सूर्य्यदृक् ॥
जप्त्वा सहस्रं गायत्र्याः शुद्धेद्ब्रह्मवधादृते ॥ २११ ॥
ब्रह्मचर्य्यं दया क्षान्तिर्दानं सत्यमकल्कता ।
अहिंसास्तेयमाधुर्य्यदमाश्चेति यमाः स्मृताः ॥ २१२ ॥
स्नानमौनोपवासेज्यास्वाध्यायोपस्थनिग्रहाः ।
नियमा गुरुशुश्रूषाशौचाक्रोधाप्रमादताः ॥ २१३ ॥

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्।
जग्ध्वा परेऽह्न्युपवसेत् कृच्छ्रं सान्तपनं चरन् ॥३१४॥
पृथक् सान्तपनद्रव्यैः षडहः सोपवासकः।
सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनः स्मृतः ॥ ३१५ ॥
पर्णोदुम्बरराजीवबिल्वपत्रकुशोदकैः।
प्रत्येकं प्रत्यहं पीतैः पर्णकृच्छ्र उदाहृतः ॥ ३१६ ॥
तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहं पिबेत्।
एकरात्रोपवासश्च तप्तकृच्छ्र उदाहृतः ॥ ३१७ ॥
एकभक्तेन नक्तेन तथैवायाचितेन च।
उपवासेन चैकेन पादकृच्छ्रः प्रकीर्त्तितः ॥ ३१८ ॥
यथाकथञ्चित्त्रिगुणः प्राजापत्योऽयमुच्यते।
अयमेवातिकृच्छ्रः स्यात् पाणिपूरान्नभोजनः ॥३१९॥
कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम्।
द्वादशाहोपवासेन पराकः परिकीर्त्तितः ॥ ३२० ॥
पिण्याकाचामतक्राम्बुशक्तूनां प्रतिवासरम्।
एकरात्रोपवासश्च कृच्छ्रः सौम्योऽयमुच्यते ॥ ३२० ॥
एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम्।
तुलापुरुष इत्येष ज्ञेयः पाञ्चदशाहिकः ॥ ३२२ ॥
तिथिवृद्ध्या चरेत् पिण्डान् शुक्ले शिख्यण्डसम्मितान्।
एकैकं ह्रासयेत् कृष्णे पिण्डं चान्द्रायणं चरन् ॥ ३२३॥
यथाकथञ्चित् पिण्डानां चत्वारिंशच्छतद्वयम्।
मासेनैवोपभुञ्जीत चान्द्रायणमथापरम् ॥ ३२४ ॥
कुर्यात्त्रिषवणस्नायी कृच्छ्रं चान्द्रायणं तथा।
पवित्राणि जपेत् पिण्डान् गायत्र्या चाभिमन्त्रयेत्॥३२५

अनादिष्टेषु पापेषु शुद्धिश्चान्द्रायणेन तु ।
धर्मार्थं यश्चरेदेतच्चन्द्रस्यैति स लोकताम् ॥ ३२६ ॥
कृच्छ्रकृद्धर्मकामस्तु महतीं श्रियमाप्नुयात् ।
यथा गुरुक्रतुफलं प्राप्नोति च समाहितः ॥ ३२७ ॥
श्रुत्वैतानृषयो धर्मान् याज्ञवल्क्येन भाषितान् ।
इदमूचुर्महात्मानं योगीन्द्रममितौजसम् ॥ ३२८ ॥
य इदं धारयिष्यन्ति धर्मशास्त्रमतन्द्रिताः ।
इह लोके यशः प्राप्य ते यास्यन्ति त्रिविष्टपम् ॥ ३२९ ॥
विद्यार्थी प्राप्नुयाद्विद्यां धनकामो धनं तथा ।
आयुस्कामस्तथैवायुः श्रीकामो महतीं श्रियम् ॥ ३३० ॥
श्लोकत्रयमपि ह्यस्माद् यः श्राद्धे श्रावयिष्यति ।
पितॄणां तस्य तृप्तिः स्यादक्षया नात्र संशयः ॥ ३३१ ॥
ब्राह्मणः पात्रतां याति क्षत्रियो विजयी भवेत् ।
वैश्योऽपि धान्यधनवानस्य शास्त्रस्य धारणात् ॥ ३३२ ॥
य इदं श्रावयेद्विप्रान् द्विजान् पर्वसु पर्वसु ।
अश्वमेधफलं तस्य तद्भवाननुमन्यताम् ॥ ३३ ॥
श्रुत्वैतद्याज्ञवल्क्योऽपि प्रीतात्मा मुनिभाषितम् ।
एवमस्त्विति होवाच नमस्कृत्य स्वयम्भुवे ॥ ३३४ ॥
इति याज्ञवल्कीये धर्मशास्त्रे तृतीयोऽध्यायः ॥

॥ समाप्ता चेयं याज्ञवल्क्यसंहिता ॥

अतः परं प्रवक्ष्यामि जातिवृत्तिविधानकम्।
अनुलोमविधानञ्च प्रतिलोमविधिं तथा ॥ १ ॥
सान्तरालकसंयुक्तं सर्व्वं संक्षिप्य चोच्यते।
नृपाद् ब्राह्मणकन्यायां विवाहेषु समन्वयात् ॥ २ ॥
जातः सूतोऽत्र निर्दिष्टः प्रतिलोमविधिर्द्विजः।
वेदानर्हस्तथा चैषां धर्म्माणामनुबोधकः ॥ ३ ॥
सूताद्विप्र प्रसूतायां सूतो वेणुक उच्यते।
नृपायामेव तस्यैव जातो यश्चर्म्मकारकः ॥ ४ ॥
ब्राह्मण्यां क्षत्रियाच्चौर्य्याद्रथकारः प्रजायते।
वृत्तञ्च शूद्रवत्तस्य द्विजत्वं प्रतिषिध्यते ॥ ५ ॥
यानानां ये च वोढारस्तेषाञ्च परिचारकाः।
शूद्रवृत्त्या तु जीवन्ति न क्षात्त्रं धर्म्ममाचरेत् ॥ ६ ॥
ब्राह्मण्यां वैश्यसंसर्गाज्जातोमागध उच्यते।
वन्दित्वं ब्राह्मणानाञ्च क्षत्रियाणां विशेषतः ॥ ७ ॥
प्रशंसावृत्तिको जीवेद्वैश्यप्रेष्यकरस्तथा।
ब्राह्मण्यां शूद्रसंसर्गाज्जातश्चाण्डाल उच्यते ॥ ८ ॥
सीसमाभरणं तस्य कार्ष्णायसमथापि वा।
वध्रीं कण्ठे समाबध्य झल्लरीं कक्षतोऽपि वा ॥ ९ ॥
मलापकर्षणं ग्रामे पूर्व्वाह्णे परिशुद्धिकम्।
नापराह्णे प्रविष्टोऽपि वहिर्ग्रामाच्च नैर्ऋते ॥ १० ॥
पिण्डीभूता भवन्त्यत्र नोचेद् बध्या विशेषतः।
चाण्डालाद्वैश्यकन्यायां जातः श्वपच उच्यते ॥ ११ ॥
श्वमांसभक्षणं तेषां श्वान एव च तद्बलम्।
नृपायां वैश्यसंसर्गादायोगव इति स्मृतः ॥ १२ ॥

तन्तुवाया भवन्त्येव वसुकांस्योपजीविनः ।
शौलिकाः केचिदत्रैव जीवनं वस्त्रनिर्म्मिते ॥ १३ ॥
आयोगवेन विप्रायां जातास्ताम्रोपजीविनः ।
तस्यैव नृपकन्यायां जातः सूनिक उच्यते ॥ १४ ॥
सूनिकस्य नृपायान्तु जाता उद्बन्धकाः स्मृताः ।
निर्णेजयेयुर्वस्त्राणि अस्पृश्याश्च भवन्त्यतः ॥ १५ ॥
* नृपायां वैश्यतश्चौर्य्यात् पुलिन्दः परिकीर्त्तितः ।
पशुवृत्तिर्भवेत्तस्य हन्युस्तान् दुष्टसत्वकान् ॥ १६ ॥
नृपायां शूद्रसंसर्गाज्जातः पुक्कश उच्यते ।
सुरावृत्तिं समारुह्य मधुविक्रयकर्म्मणा ॥ १७ ॥
कृतकानां सुराणाञ्च विक्रेता याचको भवेत् ।
पुक्कशाद्वैश्यकन्यायां जातो रजक उच्यते ॥ १८ ॥
नृपायां शूद्रतश्चौर्य्याज्जातोरञ्जक उच्यते ।
वैश्यायां रञ्जकाज्जातो नर्त्तको गायको भवेत् ॥१९॥
वैश्यायां शूद्रसंसर्गाज्जातो वैदेहिकः स्मृतः ।
अजानां पालनं कुर्य्यान्महिषीणां गवामपि ॥२०॥
दधिक्षीराज्यतक्राणां विक्रयाज्जीवनं भवेत् ।
वैदेहिकात्तु विप्रायां जाताश्चर्म्मोपजीविनः ॥ २१ ॥
नृपायामेव तस्यैव सूचिकः पाचकः स्मृतः ।
वैश्यायां शूद्रतश्चौर्य्याज्जातश्चक्री च उच्यते ॥ २२ ॥
तैलपिष्टकजीवी तु लवणं भावयन् पुनः ।
विधिना ब्राह्मणः प्राप्य नृपायान्तु समन्त्रकम् ॥ २३ ॥
जातः सुवर्ण इत्युक्तः सानुलोमद्विजः स्मृतः ।
अथ वर्णक्रियां कुर्व्वन्नित्यनैमित्तिकीं क्रियाम् ॥ २४ ॥

अश्वं रथं हस्तिनं वा वाहयेद्वा नृपाज्ञया।
सैनापत्यञ्च भैषज्यं कुर्य्याज्जीवेत्तु वृत्तिषु॥ २५॥
नृपायां विप्रतश्चौर्य्यात् संजातो यो भिषक् स्मृतः।
अभिषिक्तनृपस्याज्ञां परिपाल्येत्तु वैद्यकम्॥ २६॥
आयुर्वेदमथाष्टाङ्गं तन्त्रोक्तं धर्ममाचरेत्।
ज्योतिषं गणितं वापि कायिकीं वृत्तिमाचरेत्॥२७॥
नृपायां विधिना विप्राज्जातो नृप इति स्मृतः।
नृपायां नृपसंसर्गात् प्रमादाद्गूढजातकः॥ २८॥
सोऽपि क्षत्रिय एव स्यादभिषेके च वर्ज्जितः।
अभिषेकं विना प्राप्य गोज इत्यभिधायकः॥ २९॥
सर्वन्तु राजवृत्तस्य शस्यते पदवन्दनम्।
पुनर्भूकरणे राज्ञां नृपकालीन एव च॥ ३०॥
वैश्यायां विधिना विप्राज्जातो ह्यम्बष्ठ उच्यते।
कृष्याजीवो भवेत्तस्य तथैवाग्नेयवृत्तिकः॥ ३१॥
ध्वजिनी जीविका वापि अम्बष्ठाः शस्त्रजीविनः।
वैश्यायां विप्रतश्चौर्य्यात् कुम्भकारः स उच्यते॥ ३२॥
कुलालवृत्त्या जीवेत नापिता वा भवन्त्यतः।
सूतके प्रेतके वापि दीक्षाकालेऽथ वापनम्॥ ३३॥
नाभेरूर्द्ध्वन्तु वपनं तस्मान्नापित उच्यते।
कायस्थ इति जीवेत्तु विचरेच्च इतस्ततः॥ ३४॥
काकाल्लौल्यं यमात् क्रौर्य्यं स्थपतेरथ कृन्तनम्।
आद्याक्षराणि संगृह्य कायस्थ इति कीर्त्तितः॥ २५॥
शूद्रायां विधिना विप्राज्जातः पारशवो मतः।
भद्रकादीन् समाश्रित्य जीवेयुः पूजकाः स्मृताः॥२६॥

शिशवाद्यागमविद्याद्यैस्तथामण्डलवृत्तिभिः ।
तस्यां वै चौरसो वृत्ती निषादो जात उच्यते ॥ ३७ ॥
वने दुष्टमृगान् हत्वा जीवनं मांसविक्रयम् ।
नृपाज्जातोऽथ वैश्यायां गृह्यायां विधिना सुतः ॥३८॥
वैश्यवृत्त्या तु जीवेत क्षात्रधर्मं न चाचरेत् ।
तस्यां तस्यैव चौरेण मणिकारः प्रजायते ॥ ३९ ॥
मणीनां राजतां कुर्य्यान्मुक्तानां वेधनक्रियाम् ।
प्रवालानाञ्च सूत्रित्वं शङ्खानां वलयक्रियाम् ॥ ४० ॥
शूद्रस्य विप्रसंसर्गाज्जात उग्र इति स्मृतः ।
नृपस्य दण्डधारः स्याद्दण्डं दण्ड्येषु सञ्चरेत् ॥ ४१ ॥
तस्यैव चावसंवृत्या जातः शुण्डिक उच्यते ।
जातदुष्टान् समारोप्य शुण्डाकर्म्मणि योजयेत् ॥४२॥
शूद्रायां वैश्यसंसर्गाद्विधिना सूचकः स्मृतः ।
सूचकाद्विप्रकन्यायां जातस्तक्षक उच्यते ॥ ४३ ॥
शिल्पकर्म्माणि चान्यानि प्रासादलक्षणं तथा ।
नृपायामेव तस्यैव जातो यो मत्स्यबन्धकः ॥ ४४ ॥
शूद्रायां वैश्यतश्चौर्य्यात् कटकार इति स्मृतः ।
वशिष्ठशापात्त्रेतायां केचित् पारशवास्तथा ॥ ४५ ॥
वैखानसेन केचित्तु केचिद्भागवतेन च ।
वेदशास्त्रावलम्बास्ते भविष्यन्ति कलौ युगे ॥ ४६ ॥
कटकारास्ततः पश्चान्नारायणगणाः स्मृताः ।
शाखा वैखानसेनोक्ता तन्त्रमार्गविधिक्रियाः ॥ ४७ ॥
निषेकाद्याः श्मशानान्ताः क्रियाः पूजाङ्गसूचिकाः ।
पञ्चरात्रेण वा प्राप्तं प्रोक्तं धर्म्मं समाचरेत् ॥ ४८ ॥

शूद्रादेव तु शूद्रायां जातः शूद्र इति स्मृतः ।
द्विजशुश्रूषणपरः पाकयज्ञपरान्वितः ॥ ४६ ॥
सच्छूद्रं तं विजानीयादसच्छूद्रस्ततोऽन्यथा ।
चौर्य्यात् काकतचौ श्रेयश्चाश्वानां तृणवाहकः ॥५० ॥
एतत् संचेपतः प्रोक्तं जातिवृत्तिविभागशः ।
जात्यन्तराणि दृश्यन्ते संकल्पादित एव तु ॥ ५१ ॥
॥ इत्यौशनसं धर्म्मशास्त्रं समाप्तम् ॥

## औशनसस्मृतिः ।

शौनकाद्याश्च मुनय औशनं भार्गवं मुनिम् ।
नत्वा पप्रच्छुरखिलं धर्म्मशास्त्रविनिर्णयम् ॥
ऋषीणां शृण्वतां पूर्वमुशना धर्म्मतत्त्ववित् ।
धर्मार्थकाममोक्षाणां कारणं पापनाशनम् ॥
सुसमाधिहृदो यूयं शृणुध्वङ्गदतो मम ।
भार्गवं पितरं नत्वा उशनं धर्म्ममब्रवीत् ॥
कृतोपनयनो वेदानधीयीत द्विजोत्तमः ।
गर्भाष्टमे व्यष्टमे वा स्वसूत्रोक्तविधानतः ॥
दण्डी च मेखलासूत्री कृष्णाजिनधरो मुनिः ।
भिक्षाहारी गुरुहिते वीक्षमाणो गुरोर्मुखम् ॥
कार्पासमुपवीतार्थं सन्निर्मितं ब्रह्मणा पुरा ।
ब्राह्मणानान्त्रिवृत् सूत्रं कौशिवादास्त्रमेव वा ॥
सदोपवीती चैव स्यात् सदा बद्धशिखो द्विजः ।
अन्यथा यत्कृतं कर्म्मतन्नवत्या यथाक्रमम् ॥
वसेदविकृतं वासः कार्पासं वा कषायकम् ।
तदेव परिधानीयं शुक्लमच्छिद्रमुत्तमम् ॥

उत्तरीयं समाख्यातं वासःकृष्णाजिनं शुभम् ।
अभावे भव्यमजिनं रौरवं वा विधीयते ॥
उपवीतं वामबाहुं सव्यं बाहुं समन्वितम् ।
उपवीतं भवेन्नित्यन्निवीतं कण्ठलम्बनम् ॥
सव्यबाहुं समुद्धृत्य दक्षिणेन धृता द्विजाः ।
प्राचीनावीतमित्युक्तं पित्र्ये कर्मणि धारयेत् ॥
अग्न्यगारे गवाङ्गोष्ठे होमे जप्ये तथैव च ।
स्वाध्यायभोजने नित्यं ब्राह्मणानाञ्च सन्निधौ ॥
उपासने गुरूणाञ्च सन्ध्ययोरुभयोरपि ।
उपवीती भवेन्नित्यं विधिरेषः सनातनः ॥
मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला ।
मुञ्जाभावे कुशानाहुर्ग्रन्थिनैकेन वा त्रिभिः ॥
धारयेद्बैल्वपालाशौ दण्डौ केशान्तगौ द्विजः ।
यज्ञार्हवृक्षजं वाथ सौम्यं व्रणमेव च ॥
सायं प्रातर्द्विजः सन्ध्यामुपासीत समाहितः ।
कामाल्लोभाद्भयान्मोहात् त्यक्त्वा न पतितो भवेत् ॥
अग्निकार्यं ततः कुर्यात्सायं प्रातः प्रसन्नधीः ।
स्नात्वा सन्तर्पयेद्देवानृषीन् पितृगणांस्तथा ॥
देवाभ्यर्चान्ततः कुर्यात् पुष्पैः पत्रेण चाम्बुभिः ।
अभिवादनशीलः स्यान्नित्यं वृद्धेषु धर्मतः ॥
असावहम्भो नामेति सम्यक् प्रणतिपूर्वकम् ।
आयुरारोग्यवान् वित्तं द्रव्याद्यपरिवर्जितः ॥
आयुष्मान् भव सौम्येति वाच्यो विप्राभिवादने ।
अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरस्ततः ॥

यो न वेत्त्यभिवादस्य द्विजः प्रत्यभिवादनम् ।
नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ॥
सव्येन पाणिना कार्यं उपसंग्रहणं गुरोः ।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणम् ॥
लौकिकं वैदिकं वापि तथाध्यात्मिकमेव वा ।
आददीत यतो ज्ञानं तत्पूर्वमभिवादयेत् ॥
नोदकं धारयेद् भैक्षं पुष्पाणि समिधस्तथा ।
एवं विधानि चान्यानि न देवार्थेषु किञ्चन ॥
ब्राह्मणं कुशलं पृच्छेत् क्षत्रियञ्चाप्यनामयम् ॥
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ।
उपाध्यायः पिता ज्येष्ठो भ्राता चैव महीपतिः ॥
मातुलश्वशुरभ्रातृमातामहपितामहौ ।
वर्णश्रेष्ठः पितृव्यश्च पुंसि ते पितरः स्मृताः ॥
माता मातामही गुर्वी पितृमातृस्वसादयः ।
श्वश्रू पितामही ज्येष्ठा ज्ञातव्या गुरवः स्त्रियः ॥
इत्युक्ता गुरवः सर्वे मातृतः पितृतस्तथा ।
अनुवर्तनमेतेषां मनोवाक्कायकर्मभिः ॥
गुरुं दृष्ट्वा समुत्तिष्ठेदभिवाद्य कृताञ्जलिः ।
न तैरुपवसेत्सार्द्धं विवादेनार्थकारणात् ॥
जीवितार्थमपि द्वेषं गुरुभिर्नैव भाषणम् ।
उदितोऽपि गुणैरन्यैर्गुरुद्वेषी पतत्यधः ॥
गुणानामपि सर्वेषां पूजाः पञ्च विशेषतः ।
तेषामाद्यास्त्रयः श्रेष्ठास्तेषां माता सुपूजिता ॥
यो हि वासयति दिवा येन सद्योपदिश्यते ।

ज्येष्ठो भ्राता च भर्त्ता च पञ्च ते गुरवस्तथा ॥
आत्मनः सर्वयत्नेन प्राणत्यागेन वा पुनः ।
पूजनीयाः प्रयत्नेन पञ्चैते भूतिमिच्छता ॥
यावत् पिता च माताच द्वावेतौ निर्विकारणम् ।
तावत् सर्वं परित्यज्य पुत्रः स्यात्तत्परायणः ।
पिता माता च सुप्रीतौ स्यातां पुत्रगुणैर्यदि ॥
स पुत्रः सकलं कर्म्म प्राप्नुयात्तेन कर्म्मणा ।
नास्ति मातृसमं दैवं नास्ति पितृसमो गुरुः ॥
तयोः प्रत्युपकारोऽपि न हि कश्चन विद्यते ।
तयोर्नित्यं प्रियं कुर्य्यात्कर्म्मणा मनसा गिरा ।
न ताभ्या मननुज्ञातो धर्म्ममिकं समाचरेत् ॥
वर्जयित्वा मुक्तिफलं नित्यनैमित्तिकं तथा ।
धर्म्मसारः समुद्दिष्टः प्रेत्यानन्दफलप्रदः ॥
सम्यगाचारवक्तारं विसृष्टस्तदनुज्ञया ।
शिष्यो विद्याफलं भुङ्क्ते प्रेत्य चापद्यते दिवि ॥
यो भ्रातरं पितृसमं ज्येष्ठं मूढ़ोऽवमन्यते ।
तेन दोषेण संप्रेत्य निरयं सम्प्रयच्छति ॥
पुंसाञ्चात्मनि वेषेण पूज्यो भर्त्ता च सम्मतः ।
यानि दातरि लोकेऽस्मिन्नुपकारोऽपि गौरवम् ॥
ये नरा भर्तृपिण्डार्थे स्वान् प्राणान् सन्त्यजन्ति हि ।
तेषामेव परान् लोकानुवाच भगवान् भृगुः ॥
मातुलांश्च पितृव्यांश्च श्वशुरान् ऋत्विजान् गुरून् ।
असावयमिति ब्रूयात्प्रत्युत्थाय यवीयसः ॥
आचार्य्यो दीक्षितो नाम्ना यवीयानपि यो भवेत् ।

भोःशब्दपूर्व्वकं चैनमभिभाषेत धर्म्मवित् ॥
अभिवाद्यास्य पूर्व्वन्तु शिरसावयशर्म्म च।
ब्राह्मणक्षत्त्रियाद्यैश्च श्रीकामैः सादरं सदा ॥
नाभिवाद्यास्तु विप्राणां क्षत्त्रियाद्याः कथञ्चन।
ज्ञानकर्म्मगुणोपेता यद्यप्येते बहुश्रुताः ॥
ब्राह्मणाः सर्व्ववर्णानां स्वस्ति कुर्य्यादिति स्थितिः।
सवर्णेऽप्यसवर्णानां कार्य्यमेवाभिवादनम् ॥
गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः।
पतिरेको गुरुः स्त्रीणां सर्व्वस्याभ्यागतो गुरुः ॥
विद्या कर्म्म वयो बन्धुर्व्वित्तं भवति यस्य वै।
मान्यस्थानानि पञ्चाहुः पूर्वं पूर्व्वं गुरूणि च ॥
पञ्चानां त्रिषु वर्णेषु भवेत्तु गुणवान् द्वि यः।
यत्र स्यात्सोऽत्र मानार्हः शूद्रोऽपि स भवेद् यदि ॥
पिण्डादिभ्यो ब्राह्मणेभ्यः स्त्रियै राज्ञेऽस्य चक्षुषे।
वृद्धाय भावहीनाय रोगिणे दुर्ब्बलाय च ॥
भिक्षामाहृत्य शिष्टानां गृहेभ्यः प्रयतोऽन्वहम्।
निवेद्य गुरवेऽश्नीयाद्वाग्यतस्तदनुज्ञया ॥
भवत्पूर्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः।
भवन्मध्यन्तु राजन्यो वैश्यस्तु भवदुत्तरम् ॥
मातरं वा स्वसारं वा मातुर्वा भगिनीं तथा।
भिक्षेत भिक्षां प्रथमं या तु नैनं विमानयेत्।
सजातीयगृहेष्वेवं सर्व्ववर्णिकमेव वा।
भैक्षस्याचरणं प्रोक्तं पतितादिषु वर्जितम् ॥
वेदयज्ञादिहीनानां प्रशस्तानां स्वकर्म्मसु।

ब्रह्मचारी चरेद्भैक्षं गृहस्थः प्रयतोऽन्वहम् ॥
गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु ।
अभावेऽप्यथ गेहानां पूर्वं पूर्वं विवर्जयेत् ॥
सर्वं वापि चरेद् ग्रामं पूर्वोक्तानामसम्भवे ।
नियम्य प्रयतो वाचं दिशस्त्वानवलोकयन् ॥
समाहृत्य तु तद्भैक्षं यावदर्थमिहाज्ञया ।
भुञ्जीत प्रयतो नित्यं वाग्यतो नान्यमानसः ॥
भैक्षेण वर्तयेन्नित्यं कामनाशीर्भवेद् व्रती ।
भैक्षेण वृत्तिनो वृत्तिरुपवाससमं स्मृता ॥
पूजयेदशनं नित्यमद्यादन्नमकुत्सयन् ।
दृष्ट्वा हृष्येत्प्रसीदेच्च प्रतिनन्देच्च सर्वतः ॥
अनारोग्यमनायुष्यमस्वर्ग्यं कृत्सभोजनम् ।
अपुण्यं लोकविद्विष्टं तस्मात्तत्परिवर्जयेत् ॥
प्राङ्मुखोऽन्नानि भुञ्जीत दक्षिणामुख एव वा ।
नाद्यादुदङ्मुखो नित्यं विधिपूर्व्वं सनातने ॥
प्रक्षाल्य पाणिपादौ च भुञ्जानो द्विरुपस्पृशेत् ।
शुचौ देशे समासीनो भुक्त्वान्ते द्विरुपस्पृशेत् ॥
मण्डलं पूर्वतः कृत्वा तत्र स्थाप्याथ भोजयेत् ।
स्वप्राणाहुतिपर्यन्तं मौनमेव विधीयते ॥
इत्यौशनसस्मृतौ प्रथमोऽध्यायः ॥

---

भुक्त्वा पीत्वा च स्नात्वा च तथा रथ्योपसर्पणे ।
ओष्ठावलोमकौ स्पृष्ट्वा वासो विपरिधाय च ॥
रेतोमूत्रपुरीषाणामुत्सर्गेणानृतभाषणे ।

तथा चाध्ययनारम्भे कासश्वासागमे तथा ॥
चत्वरं वा श्मशानं वा समागम्य द्विजोत्तमः ।
सन्ध्ययोरुभयोस्तद्वदाचान्तो वाचमेत् पुनः ॥
चण्डालम्लेच्छसम्भाषे स्त्रीशूद्रोच्छिष्टभाषणे ।
उच्छिष्टं पुरुषं स्पृष्ट्वा भोज्यं वापि तथाविधम् ॥
अश्रुपाते तथाचामे अहितस्य तथैव च ।
भोजयेत् सन्ध्ययोः स्नात्वा पीत्वा मूत्रपुरीषयोः ॥
आचान्तोऽप्याचमेत् स्पृष्ट्वा सकृत् सकृदथान्यतः ।
अग्नेर्गवामथालम्भे स्पृष्ट्वा प्रयत एव वा ॥
नृणामथात्मनः स्पर्शे नीवीं विपरिधाय च ।
उपस्पृशेज्जलं शुद्धं तृणं वा भूमिमेव वा ॥
कोशानां चात्मनः स्पर्शे वाससां चालितस्य च ।
अनुष्णाभिरफेनाभिरदुष्टाभिश्च सर्वशः ॥
शौचे च सुखमासीनः प्राङ्मुखो वाप्युदङ्मुखः ।
शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोऽपि वा ॥
अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत् ।
सोपानत्को जलस्थो वा नोष्णीषी वाचमेद् बुधः ॥
न चैव वर्षधाराभिर्न तिष्ठन् धृतोदकैः ।
नैकहस्तार्पितजलैर्विना शूद्रेण वा पुनः ॥
न पादुकासनस्थो वा बहिर्जानुरथापि वा ।
न जल्पन् हसन् प्रेक्षमाणश्च प्रह्व एव वा ।
नावीक्षमाणाद्भिर्नोष्णाद्भिर्न सफेनादथापि वा ॥
शूद्राशुचिकरैर्मुक्तैर्न क्षाराभिस्तथैव च ।
न चैवाङ्गुलिभिः शब्दमकुर्वन्नान्यमानसः ॥

न वर्णरसदुष्टाभिर्नचैव प्रदरोदकैः ।
न प्राणिजनिताभिर्वा न वह्निः कल्मेव वा ॥
हृङ्गाभिः पूयते विप्रः कण्ठाभिः क्षत्रियः शुचिः ।
प्राशिताभिस्तथा वैश्यः स्त्रीशूद्रैः संस्पर्शनं ततः ॥
अङ्गुष्ठमूलान्तरतो रेखायां ब्राह्म उच्यते ।
अन्तराङ्गुष्ठदेशिन्यो पितॄणां तीर्थमुत्तमम् ॥
कनिष्ठो मूलतः पश्चात्प्राजापत्यं प्रचक्षते ।
अङ्गुल्यग्रे स्मृतं दैवं तथैवार्षं प्रकीर्तितम् ।
मूले स्याद्दैवमार्षं स्यादाग्नेयं मध्यतः स्मृतम् ॥
तदेव सौमिकं तीर्थमेतत् ज्ञात्वा न मुह्यति ।
ब्राह्मेणैव तु तीर्थेन द्विजो नित्यमुपस्पृशेत् ।
कायेन वा दैवतेन नतु पित्र्येण वा द्विजाः ! ॥
त्रिः प्राश्नीयादपः पूर्वं ब्राह्मणः प्रयतः स्मृतः ।
संहृत्याङ्गुष्ठमूलेन मुखं वै समुपस्पृशेत् ॥
अङ्गुष्ठानामिकाभ्यां तु स्पृशेन्नेत्रद्वयं ततः ।
तर्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटं ततः ॥
कनिष्ठाङ्गुष्ठयोगेन श्रवणे समुपस्पृशेत् ।
सर्व्वासामथ योगेन हृदयन्तु तलेन वा ॥
संस्पृशेद्वै शिरस्तद्वदङ्गुष्ठेनाथवा द्वयम् ।
त्रिः प्राश्नीयादेवमेव प्रीतास्तेनास्य देवताः ॥
ब्रह्मविष्णुमहेशाश्च सम्भवन्त्यनुशुश्रुमः ।
गङ्गा च यमुना चैव प्रीयते परिमार्जनात् ॥
प्रसंस्पर्शाल्लोचनयोः प्रीयेते शशिभास्करौ ।
नासत्यौ चैव प्रीयेते स्पृष्टे नासापुटद्वयम् ॥

कर्णयोः स्पृष्टयो स्तद्वत्प्रीयते चानलानिलौ ।
संस्पृष्टे हृदये चास्याः प्रीयन्ते सर्वदेवताः ॥
मूर्द्धि संस्पर्शनादेव प्रीतस्तु पुरुषो भवेत् ।
नोच्छिष्टं कुर्वते मुख्यं विप्रयोगं नयन्ति याः ॥
अन्तवदन्तसलिलजिह्वास्पर्शे शुचिर्भवेत् ।
स्पृशन्ति बिन्दवः पादौ य आचामयतः परम् ॥
भूमिगैस्ते समाज्ञेयाः न तैरप्रयतो भवेत् ।
मधुपर्के च सोमे च ताम्बूलस्य च भक्षणे ॥
फलमूलेक्षुदण्डे च न दोषं उशना ब्रवीत् ।
प्रचरंश्चान्नपानेषु यदुच्छिष्टो भवेद् द्विजः ॥
भूमौ निक्षिप्य तद्द्रव्यमाचम्य प्रोक्षयेत्तु यत् ।
तैजसं वै समादाय भवेदुच्छेषणात्ततः ॥
अनिधाय च तद्द्रव्यमाचान्तः शुचितामियात् ।
वस्त्रादीनां विकल्पत्वात् स्पृष्टा च देवमेव हि ॥
आरभ्यानुदके रात्रौ चौरो वाप्याकले पथि ।
कृत्वा मूत्रपुरीषं वा द्रव्यहस्ते न दुष्यति ॥
निधाय दक्षिणे कर्णे ब्रह्मसूत्र मुदङ्मुखः ।
अथ कुर्य्यात् शकृन्मूत्रे रात्रौ चेद्दक्षिणामुखः ॥
अन्तर्धाय महीं काष्ठैः पर्णैर्लोष्ठतृणेन वा ।
प्रतिश्रीनशिराः कुर्य्यात् कृच्छ्रमूत्रविसर्जने ॥
छायाकूपनदीगोष्ठे चैत्याम्भःपथि भस्मसु ।
अग्नौ चैव श्मशाने च विण्मूत्रे न समाचरेत् ॥
न गोमये न कुष्टे वा न गोष्ठे नैव शाद्वले ।
न तिष्ठन् वा न निर्व्वासा न च पर्वतमस्तके ॥

न जीर्णदेवायतने न वल्मीके कदाचन ।
न च ससत्वेषु गर्तेषु न च गच्छन् समाचरेत् ॥
तुषाङ्गारकपालेषु राजमार्गे तथैव च ।
न क्षेत्रे न बिले चापि न तीर्थे च चतुष्पथे ॥
नोद्यानोपसमीपे वा नोषरे न पराशुचौ ।
न चोपानत्पादुको च छत्री वान्तरीक्षके ॥
न चैवाभिमुखः स्त्रीणां गुरु ब्राह्मणयोर्गवाम् ।
न देवदेवालययोर्नापामपि कदाचन ॥
नदीज्योतींषि वीक्षित्वा तद्वाय्वभिमुखोऽपि वा ।
प्रत्यादित्यं प्रत्यनिलं प्रतिसोमं तथैव च ॥
आहृत्य मृत्तिकां कुर्यात् लेपगन्धापकर्षणम् ।
कुर्यादतन्द्रितः शौचं विशुद्धैरुद्धृतोदकैः ॥
नाहरेन्मृत्तिकां विप्रः पांशुलां नच कर्दमात् ।
न मार्गान्नोषराद्देशाच्छौचविष्टोऽपरस्य च ॥
न देवायतनात् कूपाद् ग्रामान्न तु कदाचन ।
उपस्पृशेत्ततो नित्यं पूर्वोक्तेन विधानतः ॥
तारव्याहृतिगायत्र्या वर्णानामेषणैः क्रमात् ।
तन्मन्त्रितं पिबेद्यस्तु मन्त्राचमनमीरितम् ॥
गायत्र्या चमनेनाथ श्रुत्याचमनमीरितम् ।

इत्यौशनसस्मृतौ द्वितीयोऽध्यायः ॥

---

एवं दण्डादिभिर्युक्तः शौचाचारसमन्वितः ।
आहूत्याध्ययनं कुर्याद्वीक्षमाणो गुरोर्मुखम् ॥
नित्यमुद्यतपाणिः स्यात् सन्ध्याचारसमन्वितः ।

आस्यतामिति चोक्तश्च नासीताभिमुखं गुरोः॥
प्रतिश्रवणसम्भाषे शयानो न समाचरेत्।
आसीनो न च भुञ्जानो न तिष्ठन्न पराङ्मुखः॥
न च शय्यासनं चास्य सर्वदा गुरुसन्निधौ॥
गुरोस्तु चक्षुर्विषये न यथेष्टासनो भवेत्।
नोदाहरेदस्य नाम परोक्षमपि केवलम्॥
न चैवास्यानुकुर्व्वीत गतिभाषणचेष्टितम्॥
गुरोर्यत्र परीवादो निन्दा वापि प्रवर्त्तते।
कर्णौ तत्र पिधातव्यौ गन्तव्यं परितोऽन्यतः॥
दूरस्थो नार्चयेदेवान्न क्रुद्धो नान्तिके स्त्रियः।
न चैवास्योत्तरं ब्रूयान्न तेनासीत सन्निधौ॥
उदकुम्भं कुशान् पुष्पं समिधोऽप्याहरेत्सदा।
मार्जनं लेपनं नित्यमङ्गानां वै समाचरेत्॥
नास्य निर्माल्यशयनं पादुकोपानहावपि।
आक्रामेदासनं तस्य च्छायामपि कदाचन॥
ये दन्तकाष्ठादीन् लब्ध्वा न चास्मै विनिवेदयेत्।
अनापृच्छ्य न गन्तव्यन्तत्प्रियहिते रतः॥
न पादौ स्थापयेदस्य सन्निधाने कदाचन।
जृम्भितं हसितं चैव चपलं प्रावरणं तथा॥
वर्जयेत् सन्निधौ नित्यं नखस्फोटनमेव च।
यथाकालमधीयीत यावन्न विमना गुरुः।
आसनाद्दो गुरोः कूर्चे फलके वा समाहितः॥
आसने शयने याने नच तिष्ठेत्कथञ्चन।
धावन्त मनुधावेत गच्छन्त मनुगच्छति॥

गजोष्ट्रयानप्रासादप्रस्तरेषु कटेषु च ।
नासीत गुरुणा सार्द्धं शिलाफलतलेषु च ॥
जितेन्द्रियः स्यात् सततं वश्यात्माक्रोधनः शुचिः ।
प्रयुञ्जीत सदा वाचं मधुरां हितभाषिणीम् ॥
गन्धमाल्यां रसं कन्यां सूक्ष्मप्राणिविहिंसनम् ।
अभ्यङ्गञ्चाञ्जनोपानच्छत्रधारणमेव च ॥
कामं क्रोधं भयं निद्रां गीतवादित्रनर्त्तनम् ।
द्यूतं जनपरीवादं स्त्रीप्रेक्षालापनं तथा ॥
परोपतापपैशुन्यं प्रयत्नेन विवर्जयेत् ।
उदकुम्भं सुमनसो गोशकृन्मृत्तिकां कुशान् ॥
आहरेद्यावदन्यानि भैक्षञ्चाहरहश्चरेत् ।
तथैव लवणं सर्वं भक्ष्यं पर्युषितं नयेत् ॥
अनन्यदर्शी सततं भवेद्गीतादिनिःस्पृहः ।
नादर्शञ्चैव वीक्षेत न चरेद्दन्तधावनम् ॥
एकान्तमशुचिः स्त्रीभिः शूद्राद्यैरभिभाषणम् ।
गुरूच्छिष्टं भेषजार्थं न प्रयुञ्जीत कामतः ॥
मलापकर्षणं स्नानन्नाचरेद् वै कदाचन ।
नचातिस्पृष्टो गुरुणा स्वान् गुरूनभिवादयेत् ॥
विद्यागुरुष्वेतदेव नित्यवृत्तिः स्वयोनिषु ।
प्रतिषेधत्सु वा धर्मं हितं चोपदिशन् स्वयम् ॥
श्रेयः सुगुरुवद्वृत्तिं नित्यमेवं समाचरेत् ।
गुरुपत्नीषु पुत्रेषु गुरोश्चैव स्वबन्धुषु ॥
बालः समानजन्मा वा शिष्यो वा यज्ञकर्म्मसु ।
अध्यापयन् गुरुसुतो गुरुवन्मानमर्हति ॥

उत्सादनं वै गात्राणां स्नानं चोच्छिष्टभोजने।
न कुर्याद् गुरुपुत्रस्य पादयोः शौचमेव च॥
गुरुवत्प्रतिपूज्याश्च सवर्णा गुरुयोषितः।
असवर्णास्तु संपूज्याः प्रत्युत्थानाभिवादनैः॥
अभ्यञ्जनं स्नापनञ्च गात्रोत्सादनमेव च।
गुरुपत्न्या न कार्य्याणि केशानाञ्च प्रसाधनम्॥
गुरुपत्नी च युवती नाभिवाद्येह पादयोः।
कुर्व्वीत वन्दनं भूम्यामसावहमिति ब्रुवन्॥
विप्रस्य पादग्रहणमन्वहञ्चाभिवादनम्।
गुरुदारेषु कुर्व्वीत सदा धर्म्ममनुस्मरन्॥
मातृष्वसा मातुलानी श्वश्रूश्चापि पितृष्वसा।
संपूज्या गुरुपत्नी च समास्ता गुरुभार्य्यया॥
भ्रातृभार्य्योपसंग्राह्या ज्ञातिसम्बन्धयोषितः।
पितुर्भगिन्या मातुश्च जायायाञ्च स्वसर्य्यपि॥
मातृवद् वृत्तिमातिष्ठेन्माता तेभ्यो गरीयसी।
एवमाचारसम्पन्नमात्मवन्तं सदाहितम्॥
वेदं धर्मं पुराणञ्च तथा तत्त्वानि नित्यशः।
सम्वत्सरोषिते शिष्ये गुरुर्ज्ञानमनिर्द्दिशेत्॥
हरते दुष्कृतं तस्य शिष्यस्य वत्सरे गुरुः।
आचार्य्यपुत्रशुश्रूषु र्ज्ञानदो धार्मिकः शुचिः॥
शक्तो गुर्व्वीर्थमेधावी नाध्याप्यो दशधर्म्मतः।
कृतज्ञश्च तथा द्रोही मेधावी शुभकृन्नरः॥
प्राप्य विप्रोऽप्यविधिवत् षडध्यात्मा द्विजोत्तमैः।
एतेषु ब्राह्मणो दानमन्यत्र न यथोदितम्॥

आचम्य संयतो नित्यमधीयीत उदङ्मुखः ।
उपसंगृह्य तत्पादौ वीक्ष्यमाणो गुरोर्मुखम् ॥
अधीष्व भो ! इति ब्रूयात् विरामोऽस्त्विति वाचयेत्।
प्राक्कूलेषु समासीनः पवित्रैश्चैव पावितः ॥
प्राणायामैस्त्रिभिः पूर्वं तथाचोङ्कारमर्हति ।
ब्राह्मणः प्रणवं कुर्य्यादन्ते च विधिवद्द्विजः ॥
कुर्य्यादध्ययनं नित्यं ब्रह्माञ्जलिकृतस्थितिः ।
सर्वेषामेव भूतानां वेदश्चक्षुः सनातनः ॥
अधीते विधिवन्नित्यं ब्रह्मण्याच्यवतेऽन्यथा ।
योऽधीयीत ऋचो नित्यं क्षीराहुत्या स देवताः ॥
प्रीणाति तर्पयन्त्येनं कामैस्तृप्ताः सदैव हि ।
यजूंषि योऽधीते सततं दध्ना प्रीणाति देवता ॥
सामान्यधीते प्रीणाति घृताहुतिभिरन्वहम् ।
अथर्वाङ्गिरसो नित्यमध्यात् प्रीणाति देवता ॥
धर्माङ्गानि पुराणानि मीमांसैस्तृप्यते सुरान् ।
अपां समीपे नियतो नैत्यकं विधिमाश्रितः ॥
गायत्रीमप्यधीयीत गत्वारण्यं समाहितः ।
सहस्रपरमां देवीं शतमध्यात् दशापराम् ॥
गायत्रीं वै जपेन्नित्यं जपयज्ञः प्रकीर्तितः ।
गायत्रीं चैव वेदांश्च तुलया तुलयन् प्रभुः ॥
एकतश्चतुरो वेदान् गायत्रीं च तथैकतः ।
ओङ्कारमादितः कृत्वा व्याहृतीस्तदनन्तरम् ॥
ततोऽधीयीत एकाग्रं श्रिया परमयान्वितः ।
अध्यापयेत्तु एकाग्रं गायत्री परया तु या ॥

पुराकल्पे समुत्पन्ना भूर्भुवः स्वर्गनामतः ।
महाव्याहृतयस्तिस्रः सर्वाशुभनिबर्हणाः ॥
प्रधानं पुरुषः कालो ब्रह्मविष्णुमहेश्वराः ।
सत्वं रजस्तमस्तिस्रः कामा व्याहृतयस्त्रयः ॥
ओङ्कारस्तत्परं ब्रह्म गायत्री स्यात्तदक्षरम् ।
एवं मन्त्रो महायोगसाक्षात्सार उदाहृतः ॥
योऽधीतेऽहन्यमाने तां गायत्रीं वेदमातरम् ।
विज्ञायार्थं ब्रह्मचारी स याति परमाङ्गतिम् ॥
न गायत्र्याः परं जप्यमेतद्विज्ञानमुच्यते ।
श्रवणस्य तु मासस्य पौर्णमास्यां द्विजोत्तमाः ! ॥
आषाढ्यां प्रौष्ठपद्यां वा वेदोपक्रमणं स्मृतम् ।
उत्सृज्य ग्रामनगरं मासान्विप्रोऽर्धपञ्चमान् ॥
अधीयीत शुचौ देशे ब्रह्मचारी समाहितः ।
पुष्ये तु छन्दसां कुर्याद्वहिरुत्सर्जनं द्विजाः ! ॥
माघे वा मासि संप्राप्ते पूर्वाह्णे प्रथमेऽहनि ।
छन्दांस्यूर्ध्वमधीयीत शुक्लपक्षे तु वै द्विजाः ! ॥
वेदाङ्गानि पुराणं वा कृष्णपक्षे तु मानवः ।
इमान्नित्यमनध्यायानधीयानो विसर्जयेत् ॥
अध्यापनञ्च कुर्व्वाणो अध्येष्यन्नपि यत्नतः ।
कर्णाश्रवे दिवा रात्रौ दिवावासं समूहने ॥
विद्युत्स्तनितवर्षेषु महोल्कानाञ्च पातने ।
आकस्मिक मनध्यायमेतेष्वेव प्रजापतिः ॥
एता न स्युर्दिता नाद्यान्यद्‌प्राग्दुष्कृतादिषु ।
तदा विन्द्यादनर्थाय मन्यते जाग्रदर्शने ॥

निर्घाते वाथ चलने ज्योतिषां चोपसर्पणे ।
एतानकालिकान् विन्द्यादनध्यायागतावपि ॥
प्रागुदुष्कृतेष्वग्निषु च विद्युत्स्तनितनिस्वने ।
सद्यो हि स्यादनध्यायमनृत मुनिरब्रवीत् ॥
निध्याय एवं स्याद् ग्रामेऽरण्येषु नगरेषु च ।
कर्मनैपुण्यगामानां पूतिगन्धे च नित्यशः ॥
अन्त्यानां सङ्गते ग्रामे वृषलस्य च सन्निधौ ।
अनध्यायो निन्द्यमाने समवाये जनस्य च ॥
उदये मध्यरात्रौ च विण्मूत्रे च विसर्जयेत् ।
उच्छिष्टश्राद्धभुक् चैव मनसा न विचिन्तयेत् ॥
प्रतिगृह्य द्विजो विद्यादेकोद्दिष्टस्य केतनम् ।
त्र्यहं न कीर्त्तयेद् ब्रह्म राज्ञो राहोश्च सूतके ॥
धावकोऽनुलिप्तस्य स्नेहोगाधस्य तिष्ठति ।
विप्रस्याविदुषो देहे तावद् ब्रह्म न कीर्त्तयेत् ॥
शयानः प्रौढपादश्च कृत्वा वै वावसत्थिकाम् ।
नाधीयीतामिषञ्जग्ध्वा सूतकाद्यन्नमेव च ॥
नीहारैर्बाणशब्दैश्च सन्ध्ययोरुभयोरपि ।
अमावास्यां चतुर्दश्यां पौर्णमास्यष्टमीषु च ॥
उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षपणं स्मृतम् ।
अष्टकासु च कुर्वीत मतिमान् तासु रात्रिषु ॥
मार्गशीर्षे तथा पौषे माघे मासे तथैव च ।
तिस्रोऽष्टकाः समाख्याता कृष्णे पक्षे च सूरिभिः ॥
श्लेष्मातकस्य छायायां शाल्मलेर्मधुकस्य च ।
कदाचिदपि नाध्येयं कोविदारकपित्थयोः ॥

समानविद्येऽनुमृते तथा सब्रह्मचारिणि।
आचार्ये संस्थिते वापि त्रिरात्रं क्षपणं स्मृतम्॥
छिद्रेष्वेतेषु विप्राणां अनध्यायाः प्रकीर्त्तिताः।
हिंसन्ति राक्षसास्ते च तस्मादेतान् विसर्जयेत्॥
नैत्यके नास्त्यनध्यायः सन्ध्योपासन एव च।
उपाकर्म्माणि कर्मान्ते होममन्त्रेषु चैव हि॥
एकाचमथवैकं वा यजुः सामाथवा पुनः।
अष्टकाद्यास्वधीयीत मारुते चापि वाप्यदि॥
अनध्यायो विनाशे च नेतिहासपुराणयोः।
निधर्म्मशास्त्रेष्वन्येषु पर्वण्येतान् विसर्जयेत्॥
एष धर्म्मः समासेन कीर्त्तितो ब्रह्मचारिणः।
ब्रह्मणाभिहितः पूर्वमृषीणां भावितात्मनाम्॥
योऽन्यत्र कुरुते यत्नमनधीत्य श्रुतिं द्विजः।
स वै मूढो न सम्भाष्यो वेदवाह्यो द्विजातिभिः॥
न वेदपाठमात्रेण सन्तुष्टो वै द्विजोत्तमः।
पाठमात्रावसानस्तु पङ्के गौरिव सीदति॥
योऽधीत्य विधिवद्वेदं वेदार्थं न विचारयेत्।
स सान्वयः शूद्रकल्पः स पात्रं न प्रपद्यते॥
यदि वा त्यन्तिकं वासं कर्त्तुमिच्छति वै गुरौ।
युक्तः परिचरेदेनमाशरीरविमोक्षणात्॥
गत्वा वनं वा विधिवज्जुहुयाज्जातवेदसम्।
अधीयीत सदा नित्यं ब्रह्मविद्यां समाहितः॥
सावित्रीं शतरुद्रीयं वेदानां च विशेषतः।
अभ्यसेत्सततं वेदं भस्मस्नानपरायणः॥

वेदं वेदौ तथा वेदाः वेदान्वै चतुरो द्विज !।
अधीत्य विधिगम्यार्थं ततः स्नायाद् द्विजोत्तमः॥
वेदोदितं स्वकं कर्म्म नित्यं कुर्यादतन्द्रितः।
अकुर्वाणः पतत्याशु निरयानतिभीषणान्॥
अभ्यसेत्प्रयतो वेदं महायज्ञांश्च हापयेत्।
कुर्याद् गृह्याणि कर्माणि सन्ध्योपासनमेव च॥
नित्यं स्वाध्यायशीलः स्यान्नित्यं यज्ञोपवीतकः।
सत्यवादी जितक्रोधो ब्रह्मभूयाय कल्पते॥
सन्ध्यास्नानरतो नित्यं ब्रह्मयज्ञपरायणः।
अनसूयो मृदुर्दान्तो गृहस्थः प्रत्यवर्त्तते॥
उदानाय ततः कुर्यात्समानायेति पञ्चमम्।
विज्ञाय तत्त्वमेतेषां जुहुयादात्मनि द्विजः॥
शेषमन्नं यथाकामं भुञ्जीत व्यञ्जनैर्युतम्।
ध्यात्वा तन्मानसे देवमात्मानं वै प्रजापतिम्॥
अमृतापिधानमसीत्युपरिष्टादपः पिवेत्।
आचान्तः पुनराचामेदयं गौरिति भाषयेत्॥
अधीत्य विधिवद्वेदानर्थं चैवोपलभ्य च।
धर्म्मकार्यनिवृत्तिश्चेदेतद्विज्ञानमुच्यते॥
यः स्वयं नियतो भूत्वा धर्म्मपाठं पठेद्द्विजः।
अध्यापयेच्छ्रावयेद् वा ब्रह्मलोके महीयते॥
प्रातःकृत्यं समाप्याथ वैश्वदेवपुरःसरम्।
मध्याह्ने भोजयेद्विप्रान् सम्यक् भूतात्मभावनः॥
प्राङ् मुखो तानि भुञ्जीत सूर्याभिमुख एव वा।
आसीनस्त्वासने शुद्धे भूमौ पादौ निधापयेत्॥

आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः।
श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते उदङ्मुखः।
पश्चात् स भोजनं कुर्यात् भूमौ वा तन्निधापयेत्॥
उपवासेन तत्तुल्यमित्येवमुशना ब्रवीत्।
उपलिप्य शुचौ देशे पादौ प्रक्षाल्य वै करौ॥
आचान्तोऽक्रोधनो नक्तं पश्चात्तु भोजनं चरेत्।
इह व्याहृतिभिस्त्वन्नं परिधार्योदकेन तु॥
परिषेचनमन्त्रेण परिषिच्य ततः परम्।
चित्रगुप्तबलिं दत्त्वा तदन्नं परिषिच्य च॥
अमृतोपस्तरणमसीत्यापोशनक्रियां चरेत्।
स्वाहाप्रणवसंयुक्तं प्राणायेत्याहुतिं ततः॥
अपानायाहुतिं हुत्वा व्यानाय तदनन्तरम्।
उदानाय ततः कुर्य्यात्समानायेति पञ्चमम्॥
विज्ञाय तत्त्वमेतेषां जुहुयादात्मनि द्विजः।
शेषमन्नं यथाकामं भुञ्जीत व्यञ्जनैर्युतम्।
ध्यात्वा तन्मानसे देवमात्मानं वै प्रजापतिम्॥
अमृतापिधानमसीत्युपरिष्टादपः पिबेत्।
आचान्तः पुनराचामेदयं गौरिति मन्त्रतः॥
त्रिपदां वा त्रिरावृत्य सर्वपापप्रणाशनीम्।
प्राणानां ग्रन्थिरसीत्यालभेद्धृदयं ततः॥
आचम्याङ्गुष्ठमानीय पादाङ्गुष्ठेन दक्षिणम्।
निःस्रावयेद्धस्तजलमूर्द्ध्वहस्तः समाहितः॥
हुत्वानुमन्त्रणं कुर्य्यात् स्वधायामिति मन्त्रतः।
अथोक्षरेण स्वात्मानं योजयेद् ब्रह्मणेति च॥

सर्वेषामेव यागानामात्मयागः परः स्मृतः।
अथ श्राद्धममावास्याप्राप्तं कार्य्यं द्विजोत्तमैः॥
पिण्डान्वाहार्यकं श्राद्धं चीणे राजनि शस्यते।
अपराह्णे द्विजातीनां प्रशस्तेनामिषेण तु॥
प्रतिपत्प्रभृतिह्यन्यास्तिथयः कृष्णपक्षके।
चतुर्द्दशीं वर्जयित्वा पञ्चमीं त्त्युत्तरोत्तराम्॥
अमावस्याष्टकास्तिस्रः पौर्णमास्यादिषु त्रिषु।
तिस्रश्चाप्यष्टकाः पुण्या मासि पञ्चदशी तथा॥
त्रयोदशी मघा कृष्णावर्षासु त्वविशेषतः।
नैमित्तिकं तु कर्त्तव्यं दिवसे चन्द्रसूर्ययोः॥
बान्धवानां च मरणे नारकी स्यात्ततोऽन्यथा।
काम्यानि चैव श्राद्धानि शस्यन्ते ग्रहणादिषु॥
अयने विषुवे चैव व्यतीपाते त्वनन्तकम्।
संक्रान्त्यामक्षयं श्राद्धं तथा जन्मदिनेष्वपि॥
नक्षत्रतिथिवारेषु कार्य्यं काम्यं विशेषतः।
स्वर्गं तु लभते कृत्वा कृत्तिकासु द्विजोत्तमाः!॥
द्रव्यब्राह्मणसम्पत्तौ न कालं नियमं ततः।
कर्मारम्भेषु सर्वेषु कुर्यादभ्युदयं ततः॥
पुत्रजन्मादिषु श्राद्धं पार्वणं पार्वणे स्मृतम्।
अहन्यहनि नित्यं स्यात् काम्यं नैमित्तिकं पुनः॥
सन्निकृष्टमतिक्रम्य श्रोत्रियं यः प्रयच्छति।
स तेन कर्मणा पापी दहत्यासप्तमं कुलम्॥
यदि स्यादधिको विप्रः शीलविद्यादिभिः स्वयम्।
तस्मै यत्नेन दातव्यमतिक्रम्यापि सन्निधिम्॥

अपूपश्च हिरण्यं च गामश्वं पृथिवीं तिलान्।
अविद्वान् प्रतिगृह्णानो भस्मीभवति काष्ठवत्॥
मासमारोहणं कुर्यात् भर्तृचित्यां पतिव्रता।
तन्मृताहनि संप्राप्ते पृथक् पिण्डे नियोजयेत्॥
धर्म्मपिण्डोदकं श्राद्धं पार्वणं नग्नसंज्ञकम्।
अस्थिसञ्चयनं कर्म्म दशाहभवनं तथा॥
और्द्ध्वं दशाहमुत्कर्षे शेषस्य यदि वा भवेत्।
पिण्डोदकं नवश्राद्धं पुनः कार्यं यथाविधि॥
यद्यस्थिसञ्चयं कर्म्म दशाहमूर्द्ध्वभाक् भवेत्।
नष्टे वापहृतेऽस्थीनि दाहयेद्यदि वा पुनः॥
कुर्यादहरहः श्राद्धं प्रमीतपितृको द्विजः।
साग्निकोऽनग्निको वापि तीर्थे वेषविशेषतः॥
उत्तानं वा विवर्त्तं वा पितृपात्रं यदा भवेत्।
अभोज्यं तद्भवेदन्नं क्रुद्धैः पितृगणैश्च तैः॥
अन्नहीनं क्रियाहीनं मन्त्रहीनं तु यद्भवेत्।
सर्वमच्छिद्रमित्युक्त्वा ततो यत्नेन भोजयेत्॥
एकोद्दिष्टन्तु विज्ञेयं वृद्धिश्राद्धं तु पार्वणम्।
एतत्पञ्चविधं श्राद्धं भृगुपुत्रेण सूचितम्॥
यात्रायां षष्ठमाख्यातं तत्प्रयत्नेन पावनम्।
शुद्धयेत् सप्तमं श्राद्धं ब्रह्मणा परिकीर्तितम्॥
दैविकं चाष्टमं श्राद्धं यत् कृत्वा मुच्यते भयात्।
सन्ध्यारात्रौ न कर्त्तव्यमहोरात्रमदर्शनात्॥
देशानान्तु विशेषेण भवेत् पुण्यमनन्तकम्।
गयायामक्षयं श्राद्धं प्रयागे मरणादिषु॥

गायन्ति गाथां ते सर्वे कीर्त्तयन्ति मनीषिणः ॥
एष्टव्या बहवः पुत्राः शीलवन्तो गुणान्विताः ।
तेषां तु समवेतानां यद्येकोऽपि गयां व्रजेत् ॥
गयां प्राप्यानुषङ्गेण यदि श्राद्धं समाचरेत् ।
तारिताः पितरस्तेन स याति परमाङ्गतिम् ॥
वाराहपर्वते चैव गयां चैव विशेषतः ।
एवमादिष्वतीतेषु तुष्यन्ति पितरस्तदा ॥
व्रीहिभिश्च यवैर्माषैरद्भिर्मूलफलेन वा ।
श्यामाकैश्च तु वै शाकैर्नीवारैश्च प्रियङ्गुभिः ॥
गोधूमैश्च तिलैर्मुद्गैर्माषैः प्रीणयते पितॄन् ।
मृष्टान् फलरसानिक्षून् मृदुकान् सस्यदाडिमान्
विदार्यांश्च करण्डांश्च श्राद्धकाले प्रदापयेत् ।
लाजां मधुयुतां दद्याद् दध्नाच्छर्करया सह ॥
दद्यात् श्राद्धे प्रयत्नेन शृङ्गां गजशुकेर्तकान् ।
द्वौ मासौ मत्स्यमांसेन त्रिमासान् हारिणेन च ॥
औरभ्रेणाथ चतुरः शाके नेह च पञ्च तु ।
षण्मासांश्छागमांसेन रौरवेण च वै नतु ॥
दशमासांस्तु तृप्यन्ति वराहमहिषामिषैः ।
शशकूर्मयोर्मांसैर्मासानेकादशैव तु ॥
सम्वत्सरन्तु गव्येन पयसा पायसेन च ।
सदैव स्यमांसेन तृप्तिर्द्वादशवार्षिकी ॥
कालशाकं महाशाकं खगलोहामिषं मधु ।
अनन्तान्येव च कल्पन्ते मूत्रान्यन्यानि सर्वशः ॥
क्रीत्वा लब्ध्वा स्वयं वाथ मृतानाहृत्य वै द्विजः ।

दद्याच्छ्राद्धे प्रयत्नेन दत्तस्याक्षयमुच्यते ॥
पिप्पलीक्रमुकं चैव तथा चैव मसूरकम् ।
कुष्माण्डालाबुवार्त्ताकान् मन्धरां सारसं तथा ॥
कूटश्च भद्रमूलश्च तण्डुलीयकमेव च ।
राजमाषांस्तथा क्षीरं माहिषञ्च विवर्जयेत् ॥
कोद्रवान् कोविदारांश्च स्थलपाक्यामरीचस्तथा ।
वर्जयेत्सर्वयत्नेन श्राद्धकाले द्विजोत्तमः ॥

इत्यौशनसस्मृतौ तृतीयोऽध्यायः ॥

---

स्नात्वा यथोक्तं सन्तर्प्य पितृदेवान् ऋषींस्तथा ।
पिण्डान्वाहार्यकं श्राद्धं कुर्य्यात् सौम्यमनाः शुचिः ॥
पूर्वमेव निरीक्षेत ब्राह्मणान्वेदपारगान् ।
तीर्थं तद्धव्यकव्यानां प्रदाने चातिथिः स्मृतः ॥
ये सोमपाननिरता धर्म्मज्ञा सत्यवादिनः ।
व्रतिनो नियमस्थाश्च ऋतुकालाभिगामिनः ॥
पञ्चाग्निरप्यधीयानो यजुर्वेदविदोऽपि च ।
बह्वृचस्तु सुवर्णाश्च त्रिमधुर्वाथ वा भवेत् ॥
त्रीणाचिकेत छन्दो वै ज्येष्ठसामगणोऽपि वा ।
अथर्वशिरसोऽध्येत रुद्राध्यायी विशेषतः ॥
अग्निहोत्रपरो विद्वान् पापविच्च षड़ङ्गवित् ।
गुरुदेवाग्निपूजासु प्रसक्तो ज्ञानतत्परः ॥
अहिंसोपरता नित्यं अप्रतिग्राहिणस्तथा ।
सत्रिणो दाननिरता ब्राह्मणाः पङ्क्तिपावनाः ॥
असमानप्रवरगा असगोत्रा स्तथैव च ।

असम्बन्धश्च विज्ञेयो ब्राह्मणः पङ्क्तिपावनः॥
भोजयेद्योगिनं पूर्वं तत्त्वज्ञानरतं परम्।
अलाभे नैष्ठिकं दान्तमुपकुर्वाणकं तु वा॥
तदलाभे गृहस्थस्तु मुमुक्षुः सङ्गवर्जितः।
सर्वालाभ साधकं वा गृहस्थं मा विभोजयेत्॥
प्रकृतेगु णतत्त्वज्ञं योऽश्नातीह यतिर्भवे।
फलं वेदविदां तस्य सहस्रादतिरिच्यते॥
तस्माद्यत्नेन योगीन्द्रमीश्वरज्ञानतत्परम्।
भोजयेद्धव्यकव्येषु अलाभादिह च द्विजान्॥
एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः।
अनुकल्पः स्वयं ज्ञेय सदा सद्भिरनुष्ठितः॥
मातामहं मातुलञ्च स्वस्रेयं श्वशुरं गुरुम्।
दौहित्रं विबुधं सर्वमग्निकल्पांश्च भोजयेत्॥
न श्राद्धे भोजयेन्मित्रं धनैः कार्य्योऽस्य संग्रहः।
पैशाचदक्षिणाहीनैर्व्वामुत्र फलसम्पदः॥
कामं श्राद्धेऽर्च्चयेन्मित्रं नाभिरूपमतित्वरम्।
द्विषतां हि हविर्भुक्तं भवति प्रेत्य निष्फलम्॥
तथानुचेद्धविर्दत्त्वा न दाता लभते फलम्।
यावतो ग्रसते पिण्डान् हव्यकव्येषु मन्त्रवित्॥
ततोऽहि ग्रसते प्रेत्य दीप्तान् स्थूलानधोमुखान्।
अथ विद्यानुकूले हि युक्ताश्च स हुताऽथवा॥
यत्रैते भुञ्जते हव्यं तद्भवेदासुरं द्विजाः!।
यश्च वेदश्च वेदीच विच्छेद्येत त्रिपूरुषम्॥
स वै दुर्ब्राह्मणो ज्ञेयः श्राद्धादौ न कदाचन।

शूद्रप्रेष्यो भृतो राज्ञो वृषलो ग्रामयाजकः॥
वधबन्धोपजीवी च षडेते ब्रह्मबन्धवः।
दत्त्वा तु वेदानत्यर्थं पतितास्ते मनुरब्रवीत्॥
वेदविक्रयिणश्चैते श्राद्धादिषु विगर्हिताः।
श्रुतिविक्रयिणो यत्र परपूर्व्वाः समुद्रगाः॥
असमानान् याजयन्ति पतितास्ते प्रकीर्त्तिताः।
असंस्तुताध्यापका ये भृतकान् पाठयन्ति ये॥
अधीयीत तथा वेदान् भृतकास्ते प्रकीर्त्तिताः।
वृद्धश्रावकनिर्ग्रन्थाः पञ्चरात्रविदो जनाः॥
कापालिकाः पाशुपताः पाषण्डाश्चैव तद्विधाः।
यस्याश्नन्ति हवींष्येते दुरात्मानस्तु तामसाः॥
न तस्य तद्भवेत् श्राद्धं प्रेत्यापि हि फलप्रदम्।
अनाश्रमी यो द्विजः स्यादाश्रमी स्यान्निरर्थकः॥
मिथ्याश्रमी च विप्रेन्द्रा विज्ञेयाः पङ्क्तिदूषकाः।
दुश्चर्म्मी कुनखी कुष्ठी श्वित्री च श्यावदन्तकः॥
क्रूरो वीजनकश्चैव स्तेनः क्लीवोऽथ नास्तिकः।
मद्यपो वृषली सक्तो वीरहा दीधिषूपतिः॥
आगारदाही कुण्डाशी सोमविक्रयिणो द्विजाः।
परिवेत्ता तथा हिंस्रः परिवित्तिर्निराकृतिः॥
पौनर्भवः कुसीदी च तथा नक्षत्रदर्शकः।
गीतवादित्रशीलश्च व्याधितः काण एव च॥
हीनाङ्गश्चातिरिक्ताङ्गो ह्यवकीर्णी तथैव च।
कन्यादूषी कुण्डगोली अभिशस्तोऽथ देवलः॥
मित्रध्रुक् पिशुनश्चैव नित्यं भार्य्यानिकृन्तनः।

मातापितृगुरुत्यागी दारत्यागी तथैव च ॥
अनपत्यः कूटसाक्षी याचकोरगजीवकः।
समुद्रयायी कृतहा रथ्यासमयभेदकः ॥
वेदनिन्दारतश्चैव देवनिन्दारत स्तथा।
द्विजनिन्दारतश्चैव ते वर्ज्याः श्राद्धकर्म्मसु ॥
कृतघ्नः पिशुनः क्रूरो नास्तिको वेदनिन्दकः।
मित्रघ्नः पारदार्य्यश्च मिथ्यापण्डितदूषकः ॥
बहुनात्र किमुक्तेन विहितान्येव कुर्वते।
निन्दितान्याचरन्तेते वर्ज्याः श्राद्ध प्रयत्नतः ॥

॥ इत्यौशनसस्मृतौ चतुर्थोऽध्यायः ॥

गोमयेनोदकैः पूर्वं शोधयित्वा समाहितः।
सन्निपात्य द्विजान् सर्वान् साधुभिः सन्निमन्त्रयेत् ॥
श्वो भविष्यति मे श्राद्धं पूर्वेद्युरभिवक्ष्यति ॥
असम्भवे परेद्युर्वा यथोक्तैर्लक्षणैर्युतम्।
तस्य ते पितरः श्रुत्वा श्राद्धकाल उपस्थिते ॥
अन्योन्यमनसा ध्यात्वा सम्पतन्ति मनोजवाः।
ब्राह्मणास्ते समायान्ति पितरो ह्यन्तरिक्षगाः ॥
वायुभूताश्च तिष्ठन्ति भुक्त्वा यान्ति परां गतिम्।
आमन्त्रिताश्च ये विप्राः श्राद्धकाल उपस्थिते ॥
वसेरन्नियताः सर्वे ब्रह्मचर्य्यपरायणाः।
अक्रोधनोऽत्वरो यत्र सत्यवादी समाहितः ॥
भरमैथुनमध्वानं श्राद्धभुग्वर्जयेज्जपम्।
आमन्त्रितो ब्राह्मणो वै योऽन्यस्मै कुरुते क्षणम् ॥
आमन्त्रयित्वा यो मोहादन्यं वा मन्त्रयेत् द्विजः।

स तस्मादधिकः पापी विष्ठाकीटौहि जायते ॥
श्राद्धे निमन्त्रितो विप्रो मैथुनं योऽधिगच्छति।
ब्रह्महत्यामवाप्नोति तिर्य्यक् योनिषु जायते ॥
निमन्त्रितश्च यो विप्रो ह्यध्वानं याति दुर्मतिः।
भवन्ति पितरस्तस्य तन्मासं पांशुभोजनम् ॥
निमन्त्रितश्च यः श्राद्धे प्रकुर्य्यात्कलहं द्विजः।
भवन्ति तस्य तन्मासं पितरो मलभोजनाः ॥
तस्मान्निमन्त्रितः श्राद्धे नियतात्मा भवेद्द्विजः।
अक्रोधनः शौचपरः कर्त्ता चैव जितेन्द्रियः ॥
शोभते दक्षिणां गत्वा दिशं दर्भात् समाहितः।
समूलानाहरेद्वारि दक्षिणाग्रान् सुनिर्मलान् ॥
दक्षिणाप्रवणं स्निग्धं विभक्तशुभलक्षणम्।
शुचि देशं विविक्तञ्च गोमयेनोपलेपयेत् ॥
नदीतीरेषु तीर्थेषु स्वभूमौ गिरिसानुषु।
विविक्तेषु च तुष्यन्ति दत्तेन पितरस्तथा ॥
परस्य भूमिभागे तु पितॄणां वै न निर्वपेत्।
स्वामित्वात् स विहन्येत मोहाद्यत्क्रियते नरैः ॥
अटव्यः पर्वताः पुण्या स्तीर्थान्यायतनानि च।
सर्वाण्यस्वामिकान्याहुर्नहि तेषु परिग्रहः ॥
तिलांश्चावकिरेत्तत्र सर्वतो बन्धयेद् द्विजः।
असुरोपहृतं सर्वं तिलैः शुध्यत्यजेन वा ॥
ततोऽन्नं बहुसंस्कारं नैकव्यञ्जनमव्ययम्।
चोष्यं पेयं समृद्धं च यथाशक्त्युपकल्पयेत् ॥
ततो निवृत्ते मध्याह्ने लूनलोमनखान् द्विजान्।

अभिगम्य यथामार्गं प्रयच्छेद्दन्तधावनम् ॥
तैलमभ्यञ्जनं स्नानं स्नानीयं च पृथग्विधम् ।
पात्रैरौदुम्बरैर्दद्याद्वैश्वदेवं तु पूर्वकम् ॥
तत्र स्नात्वा निवृत्तेभ्यः प्रत्युत्थानकृताञ्जलिः ।
पाद्यमाचमनीयं च संप्रयच्छेद्यथाक्रमम् ॥
ये चात्र विश्व देवन् विप्राः पूर्वं निमन्त्रिताः ।
प्राङ्मुखान्यासनान्येषां सदर्भोपहितानि च ॥
दक्षिणाग्रैकदर्भाणि प्रोक्षितानि तिलोदकैः ।
तेषूपवेशयेदेतान् ब्राह्मणान् देवकल्पकान् ॥
अस्यन्त्यमिति संकल्प्य त्वासिरंस्थे पृथक् पृथक् ।
द्वौ दैवे प्राङ्मुखौ पित्र्ये त्रय चोदङ्मुखास्तथा ॥
एकैकं वा भवेत्तत्र एवं मातामहेष्वपि ।
सत्क्रियां देशकालौ च शौचं ब्राह्मणसम्पदम् ।
पञ्चैतान्विस्तरोहन्ति तस्मान्नेहेत विस्तरम् ॥
अथवा भोजयेदेकं ब्राह्मणं वेदपारगम् ।
श्रुतिशीलादिसम्पन्नमलक्षणविवर्जितम् ॥
प्रशस्तपात्रे चान्नन्तु सर्वस्मात् प्रकृतात्मनः ।
देवतायतने चासौ निलीक्यात् सम्प्रवर्त्तते ॥
प्राश्नेदग्नौ तदन्नन्तु दद्याच्च ब्रह्मचारिणे ।
भिक्षुको ब्रह्मचारीव भोजनार्थमुपस्थितः ॥
उपविष्टेषु यच्छ्राद्धे कामन्नमपि भोजयेत् ।
अतिथिं यत्र नाश्नाति न तच्छ्राद्धं प्रकाशते ॥
तस्मात् प्रयत्नात्तीर्थेषु पूजया अतिथयो द्विजैः ।
अतीर्य रमते श्राद्धे भुञ्जते ये द्विजातयः ॥

काकयोनिं व्रजन्त्येते दत्त्वा चैव न संशयः ।
हीनाङ्गः पतितः कुष्ठी वणिक्पुक्कसनासिकः ॥
कुक्कुटः शूकरश्वानो वर्ज्याः श्राद्धेषु दूरतः ।
वीभत्समशुचिं स्वेच्छं न स्पृशेच्च रजस्वलाम् ॥
नीलकाषायवसनं पाषण्डांश्च विवर्जयेत् ।
यत् तत्र क्रियते कर्म्म पैतृकं ब्राह्मणान् प्रति ॥
तत्सर्वमेव कर्त्तव्यं वैश्वदेवस्य पूजनम् ।
यथोपविष्टान् सर्वांस्तानलङ्कुर्य्याद्विभूषणैः ॥
या दिव्या इति मन्त्रेण हस्तेत्वर्घ्यं विनिक्षिपेत् ।
प्रदद्याद् गन्धमाल्यानि धूपादीनि च शक्तितः ॥
अपसव्यं ततः कृत्वा पितॄणां दक्षिणामुखः ।
आवाहनं ततः कुर्य्यादुशन्तस्त्वेत्यृचा बुधः ॥
आवाह्य तदनुज्ञातो जपेदायान्तु न स्ततः ।
शन्नो देव्युदकं पात्रे तिलोऽसीति तिलांस्तथा ॥
क्षिप्ता चार्घ्यं तथा पूर्वं दत्त्वा हस्तेषु वै पुनः ।
संस्रावांश्च ततः सर्व्वान् पात्रीकुर्य्यात् समाहितः ॥
पितृभिःसममेतेन ह्यर्घ्यपात्रं निधाय च ।
अग्नौ करिष्य इत्यादाय पृच्छेदन्नं घृतप्लुतम् ॥
कुरुष्वेति ह्यनुज्ञातो जुहुयादुपवीतवत् ।
यज्ञोपवीतिना होमः कर्त्तव्यं कुशपाणिना ॥
प्राचीनावीतकः पित्र्यं वैश्वदेवं तु होमयेत् ।
दक्षिणं पातयेज्जानुं देवान् परिचरंस्तदा ॥
सोमाय वै पितृमते स्वधा नम इति ब्रुवन् ।

अग्नये कव्यवाहनाय स्वधेति जुहुयात्ततः ॥
अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत् ।
महादेवान्तिके वाथ गोष्ठे वा सुसमाहितः ॥
ततस्तैरभ्यनुज्ञातो गत्वा दक्षिणदिक्‌शिखाम् ।
गोमयेनोपलिप्योर्वीं कुर्यात् स्वस्य च दैवतम् ॥
मण्डलं चतुरस्रं वा दक्षिणं चोन्नतं शुभम् ।
त्रिरुल्लिखेत्तस्य मध्यं दर्भेणैकेन चैव हि ॥
ततः संस्तीर्य तत् स्थाने दर्भान् वै दक्षिणाग्रकान् ।
त्रीन् पिण्डान्निर्वपेत्तत्र हविःशेषान् समाहितः ॥
दाप्यपिण्डांस्तु तत्र निमृजल्लेपभागिनाम् ।
तेषु दर्भेष्वथाचम्य त्रिराचम्य शनैरसून् ॥
उदकं निनयेच्छेषं शनैः पिण्डान्तिके पुनः ।
अवजिघ्राद्वहन्यास्तान् पिण्डान् यथा समाहितः ॥
अथ पिण्डावशिष्टान्नं विधिना भोजयेद् द्विजम् ।
षडप्यत्र नमस्कुर्यात् पितॄन् देवांश्च धर्मवित् ॥
श्राद्धभोजनकाले तु दीपो यदि विनश्यति ।
पुनरन्नं न भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत् ॥
माषानपूपान्विविधान्दद्यात् सरसपायसम् ।
सूपशाकफलानिष्टान् पयो दधि घृतं मधु ॥
अन्नञ्चैव यथाकामं विविधभक्ष्यपेयकम् ।
यद्यदिष्टं द्विजेन्द्राणां तत्तत् सर्वं निवेदयेत् ॥
धान्यांस्तिलांश्च विविधाः शर्करा विविधा तथा ।
उष्णमन्नं द्विजातिभ्यो दातव्यं श्रेय इच्छता ॥
अन्यत्र फलमूलेभ्यः पानकेभ्यस्तथैव च ।

